॥ श्री ॥

# विध्युक्तवैवाहिक शास्त्रजिज्ञासा.

श्रीमत्कृष्णमतानुयायिना

रघुनाथेनकृता.


कल्यब्दे ४९८२, चित्रभानुवर्ष तुल्यमाने.

आख्यनगरे, मौंटरोडाख्यप्रदेशे.

हिंदुमुद्रालये—मुद्रितं.

॥ श्री ॥

# विध्युक्तवैवाहिक शास्त्रजिज्ञासा.

श्रीमत्कृष्णमतानुयायिना

रघुनाथेनकृता.

कल्यब्दे ४९८३, चित्रभानुवर्षे तुलामासे.


मद्रासाख्यनगरे, मौंटरोडाख्यप्रदेशे.

हिंदुमुद्रालये—मुद्रितं.

# शुद्धिपत्रम् ।

| पृष्ठ. | पंक्ती. | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| १ | ४ | भासमाना | भासमानः |
| ७ | २ | पश्चादग्नेद | पश्चादग्नेर्द. |
| ,, | २० | पशात् | पाशात्. |
| ८ | ५ | सुभागा | सुभगा. |
| ,, | १२ | पंचद्वृ | पंचपद्वृ. |
| ९ | २० | समन त्कर्यमा. | समनत्कर्मया. |
| १० | २१ | पतीवती | पतिवती. |
| ,, | २४ | प्रफर्व्यां | प्रफर्व्यं. |
| ११ | १ | आभिर्नृणा | आभिर्नृणां. |
| ,, | १० | अतो अस्मा | अतोस्मा. |
| ,, | १३ | प्रफर्व्यां | प्रफर्व्यं. |
| ,, | १७ | रातं | रात्रं. |
| १२ | १३ | स्विनौ | श्विनौ. |
| ,, | १६ | पत्य | पत्या. |
| ,, | १७ | सह | सो. |
| १३ | १५ | दा अग्ने | दाग्ने. |
| ,, | १७ | विश्वा | विश्वा. |
| १४ | २ | यद्दंपती | यद्दंपती. |
| ,, | १५ | दुंबरअश्वत्थ | दुंबराश्वत्थ. |
| ,, | १९ | शय्यैकात् | शयैक्यात्. |
| १६ | ९ | चथुर्थ्यां | चतुर्थ्यां. |
| १७ | ६ | आद्रया | आर्द्रया. |
| १८ | ८ | सापर्यन् | सापयन्. |
| ,, | १३ | संयोजयंन् | संयोजयन्. |
| ,, | ६ | ऊरू | ऊरु. |

| | | | |
|---|---|---|---|
| १८ | १६ | प्रजाताति: | प्रजापति: |
| २० | ४ | द्विशाङ्कय: | द्विषङ्कय: |
| ,, | ,, | परेतु | परैतु. |
| ,, | १३ | मग्नो | मग्नौ. |
| ,, | १६ | तेग्नो | तेग्नौ. |
| २१ | १३ | उद्वेजायाम: | उद्वेजयाम: |
| २४ | ११ | स्तत्पर्या | स्तात्पर्य. |
| ,, | १४ | नखान | नखाम. |
| २५ | ८ | भर्त्रृं | भर्तृं. |
| २८ | १५ | तिसृणां | तिसृणां. |
| ३४ | ८ | जुल्हा | जुल्ह. |
| ,, | १५ | रूपणा | रूपेणा. |
| ,, | १९ | जुल्हू | जुहू. |
| ,, | २४ | पेवी: | देवी: |
| ३५ | ५ | मनुष्यणां | मनुष्याणां. |
| ,, | १५ | निषंण्वा | निषण्वा. |
| ३६ | २ | प्रसित्ध | प्रसित्धि. |
| ३७ | ५ | चित्याव | चित्रव. |
| ,, | ८ | आवरो | अवरो. |
| ३८ | ६ | मानानू | मानान्. |
| ,, | ,, | संघर्षयित्रीन् | संघर्षयितृन्. |
| ,, | ९ | जरदद्दा | जरद्दा. |
| ४२ | ६ | विष्टण्वावेशी | विष्णावेशी. |
| ४६ | ६ | व्यास: | व्यासा: |
| ४७ | ३ | अद्यादि | आद्यादि. |
| ४८ | १ | एततन्निषेघस्य | एतन्निषेधस्य. |
| ,, | १८ | शास्त्रीयेमेव | शास्त्रीयमेव. |
| ५१ | ६ | गार्हस्थे | गार्हस्थ्ये. |

# ॐ एकमेवा द्वितीयं ब्रम्हविजयते.



१. अथ वक्ष्यामः परिणामं विवाहविषयाणां कलावपि शास्त्रप्रमाणभूतानां श्रुतिस्मृति पुराणानां जिज्ञासायाः ।

२. रागतः प्राप्तत्वात् विवाहविषयकं शास्त्रं नापूर्वविधिः किंतु नियमविधित्वेन भासमाना परिसंख्या विधिः । अतः विवाहः पुरुषाणां वा स्त्रीणां वा ऐच्छिकः । अत्रोदाहरंति ।

**मनुः अध्याये ५ श्लोके ५६.**

" न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला " ॥

**चमसश्च—भाग० ए० स्कं० अ० ५ श्लो० ११.**

" लोके व्यवायामिषमद्यसेवा नित्यास्तु जंतो र्न हि तत्र चोदना ।
व्यवस्थिति स्तेषु विवाहयज्ञ सुराग्रहैरासु निवृत्तिरिष्टा " ॥

३. ब्रह्मचारिणां विवाहः ऐच्छिक इति वदंति स्मृतयः पुराणानिच ।

तथाहि—

| स्मृतिपुराणानि | अध्याय संख्या | श्लोक संख्या | धर्मशास्त्रसंग्रहस्यपत्र संख्या |
|---|---|---|---|
| मनुस्मृतौ .... | १ | २४३।२४४।२४९ | ,, |
| विष्णु ........ | २८ | ,, | ११३ |
| लघुहारीत .... | ३ | ,, | १८२ |
| याज्ञवल्क्य .... | १ | ४९ | ४१८ |
| उशना........ | ३ | ,, | ९१७ |
| व्यास ........ | १ | ,, | ३२४ |
| दक्ष ........ | १ | ,, | ३८३ |
| गौतम ........ | ३ | ,, | ४०६ |
| वसिष्ठ ........ | ७ | ,, | ४७० |
| विष्णुपुराणे तृतीये अंशे.. | १० | १३,१४,१५ | ,, |
| भागवतसप्तमस्कंधे .... | १२ | १४ | ,, |
| एकादशस्कंधे. | १७ | ३०,३७ | ,, |
| मार्कंडेयपुराणे. | २८ | १५,१६ | ,, |
| अग्निपुराणे.... | १५३ | १७ | ,, |

४. दृश्यते स्त्रीणां विवाहः ऐच्छिक इति उदाहरिष्यमाणैः स्मृतिपुराणवचनैः ।

**श्रीभागवतचतुर्थस्कंधे अ० १ श्लो० ६३.**

"तेभ्यो दधारकन्ये द्वे वयुनां धारिणीं स्वधा ।
उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे" ॥

**श्रीधरः**—"तयोस्तु संततिर्नाभवत् जीवन्मुक्तत्वात्"

**वीरराघवः**—"सनाकादिवत् ऊर्ध्वरेतस्के ते इति भावः"

**मनु० अ० २ श्लो० ४.**

" अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित् " ।

**वसिष्ठ संहितायां अ० १७ प० ४८९.**

" यावच्च कन्यामृतवः स्पृशंति तुल्यैः सकाममभियाच्यमानां ।
भ्रूणानि तावंति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः "॥

**श्रीभागवते तृतीयस्कंधे अ० २१ श्लो० २७** "मृगयतीं पतिं"
**चतु० अ० १ श्लो० ६** 'कामयानां' **वीरराघवः** 'पतिं कामयमानां'
**पूर्वोक्तस्कंधे अ० २२ श्लो० ९** "अन्विच्छति पतिं युक्तं"
**पराशरमाधवीये** " द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च"
निष्कामाः सकामाश्चेति भावः

८. यदि विवाहः ऐच्छिकः, तर्हि विवाहस्य मुख्यकालः वधूवराणां प्रवृद्धदशायामेव भवितव्यः। स कालः वराणां षोडशवर्षः वधूनां तु रजस्वलात्वप्राप्तिः । अयंकालः दशवर्षानंतरीयः । अत्रोदाहरंति ।

**पराशर० अ० ७ प० २४.**

" अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
× × ×
+ नरकं यांति दृष्ट्वा कन्यां रजस्वलां " ॥

**यम० प० ८६२ श्लो० २२.**

" प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितं " ॥

**वृद्धगौतम० अ० ४ प० ६१६.**

" श्रीभगवानुवाच ।

कन्या चाऽक्षतयोनिः स्यात् कुलीना पितृमातृतः

ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ।

सा प्रशस्ता वरारोहा शुद्धयोनिः प्रशस्यते " ॥

**वसिष्ठ० अ० ८ प० ४७१** " अस्पृष्टमैथुनां "

**अ० १७ प० ४८९.**

" प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता " ।

**नारदः**—" दीर्घकुत्सितरोगार्ता व्यंगा संस्पृष्टमैथुना ।

दृष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः " ॥

**याज्ञवल्क्य० अ० १ प० ४१४ श्लो० ५२.**

" अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां " ॥

**आश्वलायन गृह्य सूत्रे १–५–३.**

बुध्दिरूपशील लक्षणसंपन्ना मरोगामुपयच्छेत.

**गौतमः अ० १८ प० ४२३** " प्रागृतोरप्रयच्छन् दोषी "

**संवर्त० प० ५८९–५९०.**

" अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।

त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलां ॥

तस्माद्विवाहयेत् कन्यां यावन्नर्तुमती भवेत् ।

विवाहोष्टमवर्षायाः कन्यायास्तु प्रशस्यते " (?) ॥

**भारते आनुशासनिके अ० ४४ भीष्मः**

त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।

चतुर्थेत्वथ संप्राप्ते स्वयं भर्तार मर्जयेत् ॥
प्रजा नहीयते तस्याः रातिश्च भरतर्षभ ।
अतोन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः ॥

**मनु० आपद्धर्मे अ० ९ श्लो० ९०–९१.**

" त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विंदेत सदृशं पतिं ॥
अदीयमाना भर्त्तारमधिगच्छेद्यादि स्वयं ।
नैनः किंचिदवाप्नोति न च यं साधिगच्छति " ॥

**विष्णु० अ० २४ प० ११०.**

" ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरं ।
ऋतुत्रयेव्यतीते तु प्रभवत्यात्मनस्तदा ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति " ॥

**याज्ञवल्क्य० अ० १ प० ४१९ श्लो० ६४.**

" अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातृणां कन्या कुर्यात्स्वयंवरं " ॥

**गौतम० प० ४२३** " त्रीन् कुमार्यृतूनतीत्य स्वयं युज्येत "

**बृहत्पराशर० अ० ४ प० ११७.**

" जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ।
कन्यालंकृत्य दीयेत विवाहो वेधसः स तु ॥
रेतो मज्जति यस्यास्त सूत्रंच ह्रादिकेनिलं ।
पुमान्स्यात् लक्षणैरेतैर्विपरीतैश्च षंडकः " ॥

**आ० गृ० सू० १–१८–२** " षोडशेवर्षे "

**दक्ष० अ० १ प० ३८३.** "अप्राप्त व्यवहारो सौयावत्षोडशवार्षिकः"

**आ० गृ० सू० १-५-२.** "बुद्धिमते कन्यां प्रयच्छेत्"

**६.** अतः वरस्य षोडशवर्षात्पूर्वं वध्वाः दशवर्षात्पूर्वं विवाहो न कर्तव्यः इति साधारणो विधिः। किंच कन्यायाः दानकालस्तु तस्याः द्वादशवर्षानंतरः गौणः निंद्यश्च, तथापिकन्यायाः ऋतुत्रयपर्यंतं वर्तते तदनंतरं सा स्वयं आत्मानं दातुं समर्था भवति॥

**७.** विवाहो नाम कन्यादानोत्तरकालीनः अथवा स्वयंस्वस्यदानोत्तर-कालीनो वा वरवध्वोः यस्समयः संभवसहितः सएव। अतःपरं वधूः भर्तुः सगोत्रा सपिंडा ससूतका भवति-अत्रोदाहरंति।

**ऋग्वेदे मंडले १० सूक्ते ८५.** "सायनः, विवाहे कन्याहस्तग्रहणे गृभ्णामीत्येषा" सूत्रितंच--आ० गृ० सू० १-७-३.

> गृभ्णामिते सौभगत्वाय हस्तं मया पत्याजर दष्टिर्यथासः।
> भगोअर्यमासवितापुरंधिर्मह्यंत्वा दुर्गार्हपत्यायदेवाः॥ ३६॥
> तांपूषञ्छिवतमामिरयस्वयस्यां बीजं मनुष्या ३ वपंति।
> यानऊरूउशती विश्रयाते यस्या मुशंतः प्रहरामशेपं॥३७॥

हे वधु ते तव हस्तं गृभ्णामि गृण्हामि किमर्थं सौभगत्वाय सौभाग्याय मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्यासी भवसि भगोऽर्यमा सविता पुरंधिः पूषा एतेदेवास्त्वा त्वां मह्यं अदुः दत्तवंतः किमर्थं गार्हपत्याय यथाहं गृहपतिः स्यामिति॥ ३६॥

हे पूषन् पोषक एतन्नामकदेव शिवतमामत्यंतमंगलभूतां तामेरयस्व आईरय सर्वतः प्रेरय यस्यामूरौबीजंरेतोलक्षणं मनुष्या वपंत्यादधते यानोस्माकमूरू उशती कामयमाना विश्रयाते यस्यामूरौ उशंतः कामयमाना वयं शेपं स्पर्शनयोग्यं पुंस्प्रजननं प्रहराम उरौव्यंजनं संबंधं करवामेत्यर्थः॥ ३७॥

**आ० गृ० सू० १–७–३ पृ० २६.**

पश्चादग्नेदृषदश्मानं प्रतिष्ठाप्योत्तर पुरस्तादुदकुंभं समन्वारब्धायांहुत्वातिष्टन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृण्हामिते सौभगत्वाय हस्तमित्यंगुष्टमेव गृण्हीयाद्यदिकामयीतपुमांस एवमेपुत्राजायेरन्निति ॥३॥

**आ० गृ० सू० १–७–६ पृ० २८.**

**सू०** ६. प्रदक्षिण मग्निमुदकुंभंचात्रिःपरिणयन्जपाति अमोहमस्मिसात्वं सात्वमस्य मोहं द्यौरहं पृथिवीत्वं सामाह मृकूत्वंतावेह विवहावहै प्रजां प्रजनयावहै संप्रियोरोचिष्णू सुमनस्य मानो जीवेवशरदःशत मिति ॥

**सू०** ७. परिणीय परिणीयाश्मानमारोहयती ममश्मान मारोहाश्मेवत्वं स्थिराभव । सहस्व पृतनायतोभितिष्ट पृतन्यत इति ॥

**सू०** १३. अर्यमणं नुदेवं कन्या अग्निमयक्षत-सइमां देवो अर्यमा प्रेतो मुंचातु नामुतःस्वाहा--वरूणं नुदेवं कन्या अग्निमयक्षत-सइमां देवो वरूणः प्रेतो मुंचातु नामुतः स्वाहा--पूषणं नुदेवं कन्या अग्निमयक्षत सइमांदेवः पूषाप्रेतो मुंचातु नामुतः स्वाहेत्यविच्छिदत्यंजलिंस्रुवे जुहुयात् ॥

**ऋग्वेद मं० १० सू० ८५ ऋक् २४.**

प्रत्वामुंचामि वरूणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः ।
ऋतस्य योनौ सुकृतस्य लोके रिष्टांत्वा सहपत्यादधामि ॥

**सायनः**—जातं प्राणिनं सवित्रा प्रेरितो वरूणः आत्मपाशैः बध्नाति तस्माद्वरूणस्य पशात् हे वधु त्वात्वां प्रमुंचामि येन त्वात्वां सविता वरूणस्य प्रेरकः सुशेवाः सुखोऽबध्नात् बंधनं कृतवान् । तां मोचयित्वा चर्तस्य यज्ञस्य योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोके चारिष्टामहिंसितां त्वां पुत्राद्यर्थं पत्या सहदधामि । स्थापयामि ॥ २४ ॥

**आ० गृ० सू० १.७.**

ऊर्णास्तुके केशपक्षयोर्बंधे भवतः । प्रत्वामुंचामिवरुणस्यपाशादिति ॥

**ऋग्वेद मं० १० सू० ८५ ऋक् २५.**

प्रेतो मुंचामि नामुतः सुबध्धा ममुतस्करं ।
यथेयमिं द्रमीढ्वःसुपुत्रासुभागासति ॥

**सायनः**—इतः पितृकुलात् प्रमुंचामि त्वां नामुतो भर्तृगृहा त्प्रमुंचामि अमुतो भर्तृगृहे सुबध्धां करं यथेयंकन्यका हे इंद्रमीढ्वः सेक्तः सुपुत्रासुभगा सुष्टुभाग्या वासति भवति तथाकुरु ॥ २५ ॥

**आ० गृ० सू० १.८.** " उत्तरामुत्तरया. "

**आ० गृ० सू० १-१९.**

अथैनामपराजितायां दिशिसप्तपदान्यभ्युत्क्रामयतीषएकपदूर्जे द्विपदीराय स्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पंचदृतुभ्यः षटपदीसखा सप्तपदीभव सामामनुव्रताभवपुत्रान्विंदावहै बहूंस्तेसंतुजरदष्टयइति ।

**सू० २२.** ध्रुवमरूंधतीं सप्तऋषी नितिदृष्ट्वा वाचं विसृजेत जीव पत्नीं प्रजां विंदेयेति ।

**सायनः**—विवाहानंतरभाविनिप्रयाणे पूषात्वेतो नयत्वित्यनयारथादि यानमारो हयेत् । सूत्रितंच—आ० गृ० सू० १-८-१.

**ऋग्वेदे मं० १० सू० ८५ ऋ० २५.**

पूषात्वेतोनयतु हस्त गृह्याश्विनात्वाप्रवहतां रथेन । गृहान्गच्छ गृहपत्नीयथासो वशिनीत्वं विदथमावदासि ।

**सायनः**—गृहान् भर्तृ संबंधिनो गछत्वं गृहपत्नी यथासोभवासि, स्वगृ-

हस्वामिनी भवासि, वाशिनी सर्वेषां गृहागतानां वशंप्रापयित्री पत्युर्वशे वर्तमानावा, विदथं पतिगृहमावदासि, आवदसि, गृहस्थितं भृत्यादि जनमावद ।

**आ० गृ० सू० १–८–१.**

प्रयाण उपपद्यमाने पूषात्वेतो नयतु हस्तगृह्येति यानमारोहयेत् ।

**सायनः**—विवाह होमा नंतरं स्वगृहं गंतव्यं ।

**सायनः**—इहप्रिय मित्येषा वध्वा गृहप्रवेशिनी । सुत्रितंच--आ० गृ० सू० १-८-८.

**ऋग्वेदे मं० १० सू० ८५ ऋ०.**

इहप्रियं प्रजयाते समृध्यतामस्मिन्गृहे गार्हपत्याय जागृहि ॥
एनापत्यातन्वा १ संसृजस्वा थाजिव्रीविदथमावदाथः ॥ २७॥

**सायनः**—हे वधूः ते तवास्मिप्रतिकुले प्रियं प्रजयासहसमृध्यतां-अस्मिन् गृहेगार्हपत्याय गृहपतित्वाय जागृहि-बुध्यस्व-एनानेन पत्या सहतन्वं स्वीयं शरीरं संसृजस्व संसृष्टाभव अधाऽथजिव्री जीर्णौजायापती युवां विदथं गृहमा वदाथः आभिमूख्येन वदतं।

**आ० गृ० सू० १-८-८.** इह प्रियंप्रजयाते समृध्यता मितिगृहं प्रवेशयेत्.

**सायनः**—गृहप्रवेशआनः प्रजां जनयात्वि त्याद्याश्च तस्त्रो होमार्थाः । सूत्रितंच--आ० गृ० सू० १-८-९.

**ऋग्वेदे मं० १० सू० ८५.**

आनः प्रजांजनयतु प्रजापति राजरसायसमन क्त्वर्यमा ।
अदुर्मंगलीः पतिलोकमाविशशंन्नोभवाद्विपदेशं चतुष्पदे॥ ४३॥
अघोर चक्षुरपतिघ्न्येधिशिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामास्योनाशंन्नो भवाद्विपदेशंचतुष्पदे ॥ ४४ ॥

संराज्ञीश्वशुरे भवसंराज्ञीश्वश्र्वां भव ।
ननांदरि संराज्ञी भवसंराज्ञी अधिदेवृषु ॥ ४५ ॥
समंजंतु विश्वेदेवाः समापो हृदयानिनौ ।
संमातरिश्वा संधाता समुदेष्ट्री दधातुनौ ॥ ४६ ॥

**सायनः**—प्रजापतिर्देवो नोऽस्माकं प्रजामाजनयतु अर्यमा चाजर साय जरापर्यंतं जीवनायसमनक्तु संगमयतु सा त्वं अदुर्मंगलीः दुर्मंगलरहिता सुमंगली + + सती पतिलोकं पतिसमीप माविश प्राप्नुहि नो अस्माकं द्विपदेशंभव तथाचशं चतुष्पदे भव ॥ ४३ ॥

हे वधुत्वं अघोरचक्षुः क्रोधादभयंकरचक्षुः एधि भव तथाऽ पतिघ्नीभव तथा पशुभ्यः शिवाहितकरीभव सुमनाः सुवर्च्चाश्च भव वीरसूःपुत्राणामेव प्रसवित्री देवकामास्योना सुखक-रीचभव ॥ ४४ ॥

हे वधु श्वशुरादिषुत्वं संराज्ञीभव देवृषु देवरेष्वित्यर्थः॥४५॥

**आ० गृ० सू० १–८–९.**

विवाहाग्नि मुपसमाधाय पश्चाद स्यानडुहं चर्मास्तीर्य प्राग्ग्रीव मुत्तर लोमतस्मिन्नुपविष्टायां समन्वारब्धायां आनःप्रजां जनयतु प्रजापति रितिचतसृभिः प्रत्यृचंहुत्वा समंजंतु विश्वेदेवा इतिदध्नः प्राश्य प्रतिप्रय-च्छेदाज्यशेषेण वानक्तिहृदये ।

**ऋग्वेदे मं० १० सू० ८५ ऋ०.**

उदीर्ष्वातः पतीवतीह्ये ३ षाविश्वावसुं नमसागीर्भिरीळे ।
अन्यामिच्छपितृषदंव्यक्तां सते भागोजनुषातस्यविद्धि ॥२१॥
उदीर्ष्वाऽतो विश्वावसो नमसेळामहेत्वा ।
अन्यामिच्छप्रफर्व्यां १ संजायां पत्यासृज ॥ २२ ॥

**सायनः**—आभिर्नृणा विवाहःस्तूयते हे विश्वावसो अतःस्थानात्कन्या समीपादुदीर्ष्व उत्तिष्ट एषा कन्यापतिवती हि संजाता अत-उदीर्ष्वेतिवाऽतः शद्बो योज्यः विश्वावसुमेतन्नामानं गंधर्वं नमसा नमस्कारेणगीर्भिः स्तुतिभिश्चेळे स्तौमितर्ह्येनां विहाय कां स्वीकरोमीति यदिब्रूषेतर्ह्यन्यां पितृषदांपितृकुले-स्थितां व्यक्तामनूढेति परिस्फुटां बिगतां जनांवा स्तनो द्गमादिराहित्येनाऽप्रौढामित्यर्थः स तादृशः पदार्थः तेतवभागः कल्पितः तस्य तं भागं विद्धिजानीहि जनुषा जन्मनाल भस्वेत्यर्थः ॥ २१ ॥

अतो अस्माच्छयनात्धेविश्वावसो कन्यास्वामिन् गंधर्वं उदीर्ष्व उद्गच्छ + विश्वावसुर्नामगंधर्वः कन्यानामधि पतिर्यतः । लभामितेनकन्यामितिहि मंत्रः स तादृश देवत्वां नमसानमस्कारेणेळामहेस्तुमः सत्वमन्यां प्रफर्व्यां वृहन्नि-तंबां कन्यामिच्छ जायांमां पत्यासह पुनःसंसृज ॥ २२ ॥

**आ० गृ० सू० १-८.**

अक्षारलवणाशिनौ ब्रह्मचारिणा वलंकुर्वाणावधः शायिनौस्यातां॥ १० ॥

अतऊर्ध्वं त्रिरातं द्वादशरात्रं ॥ ११ ॥

**भाष्यं**—अतोगृह प्रवेशनीय होमादूर्ध्वं त्रिरात्रं द्वादशरात्रं वानियतौ स्यातां ॥ ११ ॥

**आ० गृ० सू० १-८-१२.** "संवत्सरं वैकऋषिर्जायत इति"।

**भाष्यं**—संवत्सरं वानियतौ स्यातां एकऋषिकल्पः पुत्रो जायते इति कृत्वा । अन्येत्वाहुः व्रतांते एकऋषिस्संपद्यते पितृगोत्रं विहाय पतिगोत्रं भजत इत्यर्थः ॥ १२ ॥

**आ० गृ० सू० १–८–१३.**

चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥ १३ ॥

**ऋग्वेदे मं० १० सू० ८५.** "सत्येनोत्त भितेति सूक्तं द्रष्टव्यं" ।

**आ० गृ० सू० १–८.**

अन्नं ब्राह्मणेभ्यः ॥ १४ ॥ अथस्वस्त्ययनं वाचयीत ॥ १५ ॥

**आ० गृ० सू० १–९–१.**

पाणिग्रहणादिगृह्यं परिचरेत्स्वयं पत्न्यपिवा पुत्रः कुमार्यंतेवासीवा ॥ १ ॥

**यजुःशाखायां**—अनुक्रमणिकायां. प० १६२.

तयासह दर्भेष्वासीनः प्राणानायम्य आवाभ्यां कर्माणिकर्तव्यानि प्रजाश्च उत्पादयितव्याः पत्न्यर्थं पुनः प्राणानायम्य-आवाभ्यांकर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्याः ॥ इति पत्नींवाचयति ।

\+ \+ \+

प० १६४. स्वस्यदक्षिण हस्तेन तस्याः दक्षिणं हस्तंगृहीत्वा पूषात्वे तोनयतु हस्त गृह्यास्विनौत्वा प्रवहतांरथेन । गृहान्गच्छ गृहपत्नी यथासो-वशिनीत्वं विदथमावदासि ॥ इति अग्नेः अभिमुखमानीय ।

\+ \+ \+

तस्या उत्तानं सांगुष्टं दक्षिणं हस्तं अर्वाचीनेनस्वदक्षिण हस्तेन- ॥ गृभ्णामिते सुप्रजास्त्वाय हस्तं मयापत्यजरदष्टिर्यथासः । भगो अर्यमा सविता पुरंधिः मह्यंत्वा दुर्गार्हपत्यायदेवाः । तेहपूर्वेजनासहयत्र पूर्ववहो-हिताः । मूर्धन्वान्यत्र सौभ्रवः पूर्वोदेवेभ्य आतपत् । सरस्वाति प्रेदमव सुभगे वाजिनीवति तान्त्वाविश्वस्य भूतस्य प्रगायामस्यग्रतः । यएति प्रदिशस्सर्वादिशोनु पवमानः ॥ इति चतसृभिः हस्तं गृहीत्वा तयासह उत्थाय अग्नेरुत्तरतो गत्वा तत आरभ्य प्रागायतनानिउदगाय तनानिवासप्त पदानि क्रमयाति-एकामिष इत्यादिभिःसप्तभिः ॥

**अ० १.६५—तै० ब्रा० कांडे ३ प० १४६ भाष्ये प० ५१.३.**

एकमिषे विष्णुस्त्वान्वेतु द्वेऊर्जे विष्णु० त्रीणिव्रताय विष्णु० चत्वारिमायोभवाय विष्णु० पंचपशुभ्यो वि० षड्रायस्पोषाय वि० सप्त सप्तभ्यो होत्राभ्यो वि० इतिसप्तभिः प्रतिमंत्रं दक्षिणेन पदाप्रक्रमय्य सप्तमेपदे निहिते सखा सप्तपदाभव सखायः सप्तपदा अभूमसख्यंते गमेयं सख्यात्ते मायोषं सख्यान्मेमायोष्ठाः समयावसंकल्पावहैसंप्रियौरोचिष्णू सुमनस्यमानौ इषमूर्जमभिसंवसानौसन्नौ मनागुं सि संव्रता समुचित्तान्या करं । सात्वमस्यमूहममूहमस्मि सात्वंद्यौरहं पृथिवीत्वं रेतो हं रेतोभृत्त्वं मनोहमास्मिवाक्त्वं सामाहमास्मिऋच्क्कं सामामनुव्रताभवपुंसे पुत्राय वेत्तवैश्रियै पुत्राय वेत्तवा एहिसूनृते-इति जापित्वा-अग्निप्रदक्षिणंकत्वा ॥

* * * * *

अ० १.६८. आतिष्टेममश्मानमश्मेवत्वं स्थिराभव । अभितिष्ट पृतन्यतः सहस्व पृतनायतः ॥

* * * * *

वध्वंजलिं गृहीत्वातेन देवतीर्थेन ॥ इयंनार्युपब्रूते कुल्पान्यावपंतिका । दीर्घायुरस्तु मेपतिर्जीवातु शरदःशतं ॥ स्वाहा ॥

* * * * *

तुभ्यमग्रेपर्यवहंत्सूर्यांवहतुनासह । पुनःपतिभ्योजायां दा अग्ने प्रजयासह । पुनः पत्नीमग्नि रदा दायुषासह वर्चसा । दीर्घायुरस्यायःपतिःसएतु शरदःशतं । विश्वाउतत्वयावयं धाराउदन्याइव । अतिगाहेमहिद्विषः ॥ तयासह अग्निप्रदक्षिणं कत्वा ।

* * * * *

अर्यमणं नुदेवं कन्या अग्निमयक्षत । सइमां देवोअध्वरः प्रेतोमुंचाति नामुतः सुबध्धाममुतस्करत् ॥ स्वाहा ॥

* * * * *

**अ० १६९.** त्वमर्यमा भवसि यत्कनीनां नामस्वधावत्स्वर्यं बिभर्षि । अंजंतिवृक्षं सुधितं नगोभिर्यद्दंपतीसमनसाकृणोषि ॥ स्वाहा ।

* * * * *

**अ० १७०.** योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इंद्र मूतये ॥ सुकिंशुकंशल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रं । आरोह वध्वमृतस्यलोकं स्योनं पत्येवहतुं कृणुष्व ॥

* * * * *

संम्राज्ञीश्वशुरेभव संम्राज्ञी श्वश्र्वांभव । ननांदरि संम्राज्ञीभव संम्राज्ञी अधिदेवृषु ॥

**प्रवेश होमे प० १७४.**

ध्रुवैधि पोष्यामयिमह्यंत्वा दाद्बृहस्पतिः ।
मयापत्या प्रजावती संजीव शरदःशतं ॥ स्वाहा ।

* * * * *

इहप्रियं प्रजयाते समृध्यता मास्मिन्गृहे गार्हपत्याय जागृहि । एना पत्यात न्व ़ संसृजस्वा थाजीव्री विदथमावदासि ॥

**भाष्ये हरदत्तीये**—कामासिध्दिमाह अनेनपत्या मया तन्वं तवशरीरं संसृजस्व । संभोगकाले एवं चिरकाल मनुभव ॥

**प० १७८.** नैय्यग्रोधौदुंबरअश्वत्थप्लाक्षेषु अन्यतमदंडंगंध पुष्पालं-कृतंवाससा सूत्रेण वापरिवेष्टितं निधायतस्मिन्विश्वावसुंगंधर्व मावाह्य अभ्यर्च्य दंपत्योःशयनकटे तयोर्मध्येनिदध्यात् ॥

* * * * *

**आपस्तंभ सू०.**—त्रिरात्र मुभयोरधःशय्याब्रह्मचर्यं क्षार लवण वर्जनंच—**सुदर्शन भाष्ये** ॥ शय्यैकात् दुर्वारमपि मैथुनं अतिप्रयत्नेन वर्जनीयं इत्येवमर्थं तान्निषेधः ॥

**सू०**—तयोः शय्यामंतरेण दंडोगंधलिप्तो वाससासूत्रेणवापरिवीत-स्तिष्ठति—भा०—तस्मिंश्चगंधर्वो विश्वावसुः भावयितव्यः ॥

**सू०**—तं चतुर्थ्यामपररात्र उत्तराभ्या मुदीर्ष्वात इति द्वाभ्या मुत्थाप्य प्रक्षाल्यनिधायाग्नेरुपसमाधानादिआज्यभागांते अन्वारब्धाया मग्ने प्रायश्चित्त इति प्रतिमंत्रं सप्ताहुती र्हुत्वाजयादि प्रतिपद्यते परिषेचनांतं कृत्वा अपरेणाग्निं प्राचीमुपवेश्य तस्याः शिरस्याज्यशेषात् भूस्वाहेति व्याहृती-भिरोंकारचतुर्थीभिरानीयापश्यंत्वेति द्वाभ्यां यथा लिंगं मिथः समीक्ष्य-समंजंत्वित्याज्यशेषेण हृदयदेशौसंमृज्य प्रजापते तन्वंमइति ति स्रोजपित्वा ॥ आरोहोरु मुपवर्हस्व बाहुं परिष्वजस्वजायां सुमनस्यमानः । तस्यां पुष्यतं मिथुनौसयोनीबव्हीं प्रजांजनयंतौ सरेतसा ॥ आर्द्रयारण्या यत्रामंथत्पुरुषं पुरुषेणशक्रः ॥ तदेतौ मिथुनौसयोनी प्रजया मृतेनेह-गच्छतं ॥ अहंगर्भ मदधामोषधीष्वहं विश्वेषु भुवनेष्वंतः ॥ अहं प्रजा-अजनयं पितॄणामहं जानिभ्योअवरीषु पुत्रान् ॥ पुत्रिणेमा कुमारिणा विश्वमायुःर्व्यश्नुतं——उभाहिरण्यपेशसावीतिहोत्राकृतद्वसु ॥ दशास्यंत्वा मृतायकं शमूथोरोमशं हथोदेवेषु कृणुतादुवः ॥ इति—समावेशने जपेत्—**भा०** समावेशनं—वध्वामैथुनार्थं शयनं ऋतुसमावेशन इत्यृतुलिंगात् ।

**मंत्रप्रश्न प० ११.**

विष्णुर्योनिं कल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतु प्रजापतिर्धा तागर्भं दधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहि सरस्वति । गर्भंते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ हिरण्ययीअरणीयन्निर्मंथतोश्विना तंतेगर्भं हवामहे । दशमेमासिसूतवे ॥ यथेयं पृथिवीमही तिष्ठंतीगर्भमादधे । एवं

तंगर्भमाधत्स्व दशमेमासिसूतवे ॥ यथा पृथिव्यग्नि गर्भाद्यौर्यथेंद्रेणगर्भिणी । वायुर्यथा दिशांगर्भ एवंगर्भं दधामिते ॥ विष्णोश्रेष्ठेन रूपेणास्यां नार्यां-गवीन्यां ॥ पुमांसं गर्भमाधेहि दशमेमासिसूतवे । नेजमेष परापत सुपुत्रः पुनरापत अस्यैमे पुत्रकामायै गर्भमाधेहि यःपुमान् ॥ व्यस्ययोनिं प्रतिरे-तोगृहाण ॥ पुमान् पुत्रोधीयतां गर्भेअंतः तं माता दशमासो विभर्तु । सजायतां वीर तमास्वानाम आते गर्भोयोनिमेतु पुमान् बाणइवेषुधिं ॥ आवीरोजायतां पुत्रस्ते दशमास्यः ॥ १३ ॥

**अनु० १७८, १७९, १८०, १८१, १८२.**

चथुर्थ्यां रात्र्यां अंत्ययामे * * * आवयोः विवाहशेषहोमंकरिष्ये इति संकल्प्य * * * अपश्यंत्वा मनसाचे कितानंतपसोजातं तपसो-विभूतं ॥ इहप्रजामिहरयिंरराणप्रजायस्व प्रजया पुत्रकाम ॥ इतिपत्नी पतिंसमीक्षेत ॥ अपश्यंत्वा मनसादीध्यानां स्वायांतनूं ऋत्वियेना-धमानां ॥ उपमामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजयापुत्रकामे ॥ इतिपतिः पत्नींसमीक्षेत ।

* * * * *

समंजंतु विश्वेदेवाः समापो हृदयानिनौ ॥ संमातरिश्वासं धातासमुदेष्ट्री दिदेष्टुनौ ॥ इतितयोः हृदयदेशौ युगपत्संमृज्य । प्रजापते तन्वंमे जुषस्व-त्वष्टर्देवेभिः सहसा मइंद्र ॥ विश्वैर्देवैररातिभिः संरराणःपुंसांबहूनांमातरः स्याम ॥ आनः प्रजांजनयतुप्रजापति राजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीः पतिलोकमाविशशंन्न एधिद्विपदेशं चतुःष्पदे ॥ तां पूषंच्छिवतमा मेरयस्व-यस्यां बीजंमनुष्यावपंति ॥ यान उरूउशती विश्रयाते यस्यामुशंतः

प्रहरेमशेफं ॥ इतिजपेत्—प्राणानायम्य फलदान तांबूलदानानि करिष्ये इति संकल्प्य तांबूलचर्वणंकृत्वा * * तद्रात्रौ अन्यस्यां वारात्रौ उपलिप्तं गंधपुष्पधूपवासितं घृतदीप दीपितं स्वास्तरणतल्पसंयुक्तं गृहंपत्न्यासह प्रविश्य प्राणानायम्य समावेशनं करिष्ये इति संकल्प्य ॥ आरोहोरु मुपबर्हस्वबाहुं परिष्वजस्वजायां सुमनस्यमानः ॥ तस्यांपुष्यतं मिथुनौ सयोनी बव्हींप्रजां जनयंतौ सरेतसा ॥ आद्रयारण्या यत्रामंथ पुरुषं पुरुषेणशक्रः ॥ तदेतौ मिथुनौसयोनी प्रजयामृतेनेहगच्छतं ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषुभुवनेष्वंतः ॥ अहंप्रजा अजनयं पितॄणा महंजरिभ्यो अवरीषुपुत्रान् ॥ पुत्रिणेमाकुमारिणा विश्वमायुर्व्यश्नुतं ॥ उभाहिरण्यपेशसावीतिहोत्राकृतद्वसु ॥ दशत्वं त्वामृताय कंशमूथो होमशंहथोदेवेषु- कृणुतोदुवः ॥ इतिजपित्वातयासह संविशेत् ॥

**सुदर्शन भाष्ये**—समावेशनं वध्वा मैथुनार्थं शयनं ॥

**सुधीविलोचने.**

अनेक भर्तृकायाः प्रथमभर्तृगोत्रेण तेनव्यवायेसति ॥
अक्षत योन्या भर्त्रंतर गोत्रेण ॥ ऋष्यश्रृंगः ॥
स्त्रीणां आद्यस्यवैः भर्तुः य द्गोत्रं तेन निर्वपेत् ॥
यदित्वक्षतयोनिःस्यात् पतिमन्यं समाश्रिता ॥
तद्गोत्रेण तयादेयं पिंडं श्राद्धं तथोदकं ॥

**तै० ब्रा० २ कां० प० ५६८.**

**अथ त्रयोदशीमाह.**—सकूतीमिंद्रसच्युतिं । सच्युतिंजघनच्युतिं । कनात्काभांन्नआभर । प्रायप्स्यान्विवसकूथ्यौ ॥ इति ॥

**सायनः**—हे इंद्र कनात्काभां कनकवद्भासमानां रूपवतीं कन्यां नो

अस्मदर्थं आभर आनय । कीदृशीं सकूतिं कूतिः आकूतिः संकल्पः तेनसहितां अस्मास्वनुरक्तामित्यर्थः । सच्युतिंच्युतिः क्षरणंवीर्यस्यंदनं तेनसहितां अनुरागातिशयेन हि सहसावीर्यं स्यंदति । एतदेवपुनःसच्युतिमित्यनूद्य जघनच्युतिमित्यनेन व्याख्यायते । आहरणे दृष्टांतः सक्थ्यौ प्रायच्स्यन्निव यथा अत्यंतकामुकः ऊरुद्वयंप्रतियब्ध्य मुद्युक्तः अत्यंतसादरेण स्त्रिय माहराति तद्वत् ॥

**अथ चतुर्दशीमाह.**—विनइंद्र मृधोजाहि । कनीखुनदिवसापयंन् । अभिनः सुष्टुतिंनय ॥ इति ॥

**सायनः**—हेइंद्रमृधः अस्मद्विवाहप्रतिबंधकान् शत्रून्विजाहि विविधं मारय । कनीखुनदिवसापयंन् यथापूर्वं भूमौविक्षिप्तं द्रव्यं अतिशयेनखनित्वा सपुरुषः स्वपुत्रं प्रत्यानीय संयोजयति । तद्वत् त्वमपि कन्यारत्नमस्मासुसंयोजयंन् नोऽस्मदीयां सुष्टुतिं शोभनांकीर्तिं अभिसर्वतोनय प्रापय ॥ एतच्च मंत्रद्वयं कन्या लाभार्थे कर्मणिविनियोज्यं ॥

**अथ पंचदशीमाह.**—प्रजातातिः स्त्रियांयशः । मुष्कयोर दधात्सपं कामस्य तृप्तिमानंदं ॥ तस्याग्ने भाजयेहमा ॥ इति ॥

**सायनः**—योयंप्रजापतिः जगतः स्रष्टा स्त्रियां यशः भार्यायांगर्भरूपेण यशसःकारणं यद्वीर्यंतन्मुष्कयोः अंडयोःसपं संबंधं अदधात् स्थापितवान् । तस्यैवस्थापितस्य विशेषणानिकामस्यतृप्तिं तृप्ति-कारणं तस्मिन्गालिते सति योषिन्मेभूयादिति कामोनिर्वर्तते तस्मिन्निवृत्तिरेवतृप्तिः । अतएवानंदं सुखकारणं । हे अग्नेइह विवाहेकर्मणि मांतस्यवीर्यस्य सुखं भाजयप्रापय ॥

**अथाष्टादशीमाह, प० ५७०.**

यथाहमस्याअतृपं ँ स्त्रियैपुमान् । यथास्त्रीतृप्यति पुँसि प्रियेप्रिया। एवंभगस्यतृप्याणि । ६ । यज्ञस्य काम्यः प्रियः ॥

**सायनः**—अस्यैस्त्रियैअस्यां विवाहेन यब्धायांस्त्रियां पुमानहं यथा अतृपं येनप्रकारेणतृप्तोस्मि । यथाच प्रियास्त्रीप्रिये । पुंसितृप्यति एव महं भगस्यतृप्याणि सौभाग्येन तृप्तोभवानिकीदृशोहं यज्ञस्य काम्यः यज्ञोहिस्वानुष्टानाय कामयते । अतएव यज्ञस्याहंप्रियः॥

**सामवेदे.—गो० गृ० सू० २ प्र० १ का०.**

पश्चादग्नेःसंवेष्टितं कटमेवं जातीयं वान्यत् पदाप्रवर्तयंतीं वाचयेत्—प्रमेपतियानः पंथाः कल्पतामिति ॥ २० ॥

**सामवेद मंत्र ब्राह्मणे १ प्र० १ ख० म०.**

प्रमेपतियानः पंथाः कल्पता८ऽशिवा अरिष्टापतिलोकं गमेयं ॥८॥

**गो० गृ० सू० २ प्र० १ का०.**

दक्षिणेनपाणिनादक्षिणम ँ समन्वारब्धायाः षडाज्याहुतीर्जुहोत्यग्नि रेतुप्रथम इत्येतत्प्रभृतिभिः ॥ २४ ॥

**सा० मं० ब्रा० १ प्र० १ ख० म०.**

अग्निरेतुप्रथमो देवताभ्यः सोस्यैप्रजांमुंचतु मृत्युपाशात् । तदयंराजा वरुणोनुमन्यतां यथेयंस्त्रीपौत्र मघवन्नरोदात् स्वाहा ॥ ९ ॥ इमामग्नि-स्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिंकृणोतु ॥ अशून्योपस्था जीवतामस्तुमातापौत्रमानंदमभिविबुध्यतामिय ँ स्वाहा ॥ १० ॥ द्यौस्ते पृष्टं रक्षतु वायुरूरू अश्विनौच । स्तनंधयस्ते पुत्रांतूसविताभि रक्षत्वावाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षंतु पश्चात् स्वाहा ॥ ११ ॥

मातेगृहेषु निशिघोषउत्थादन्यत्रत्वद्रुदत्यः संविशंतु ॥ मात्व ँरुदमु-आवधिष्टा जीवपत्नी पतिलोके विराजपश्यंती प्रजासुमनस्यमाना ँ स्वाहा । १२ ॥ अप्रजस्यंपौत्रमर्त्यं पाप्मानमुतवाअघं ॥ शीर्ष्णस्स्रजामिवोन्मुच्य-द्विशद्भ्यः प्रतिमुंचामिपाश ँ स्वाहा ॥ १३॥ परेतुमृत्युरमृतंमआगाद्वैवस्वतोनो अभयंकृणोतु ॥ परंमृत्यो अनुपरेहिपंथांयत्रनो अन्यइतरो देवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजांरीरिषोमोतवीरांत् ॥ स्वाहा ॥ १४ ॥

**गो० गृ० २ प्र० २ कां० ४ सू०.**

पाणिग्रहोजपति इममश्मानमारोहेति ॥ ४ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

इममश्मान मारोहाश्मेवत्वं ँ स्थिराभव । द्विषंतमपबाधस्व माचत्वं द्विषतामधः ॥ १ ॥

**गो० गृ० २ प्र० २ का० ६ सू०.**

त ँ सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिद्दत्यंजलिं–इयंनार्युपब्रूते–इति ॥ ६ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

इयंनार्युपब्रूतेग्नौलाजानावपंती ॥ दीर्घायुरस्तुमेपतिः शतंवर्षाणि जीव-त्वेधंतां ज्ञातयोममस्वाहा ॥ २ ॥

**गो० गृ० २ प्र० २ का० ७ सू०.**

अर्यमणंनुदेवं पूषणमित्युत्तरयोः ॥ ७ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

अर्यमणंनुदेवंकन्या अग्निमयक्षत ॥ सइमांदेवो अर्य्यमा प्रेतोमुंचातु-मामुतस्वाहा ॥ ३ ॥

पूषणंनुदेवंकन्याअग्निमयक्षत । सइमंदेवःपूषाप्रेतोमुंचातुमामुतस्वाहा ॥

**गो० गृ० २ प्र० २ कां० ८ सू०.**

हुतेपतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति मंत्रवान्वा ब्राह्मणः कन्यलापितृभ्यइति ॥ ८ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

कन्यलापितृभ्यः पतिलोकं पतीयमपदीक्षामयष्ट ॥
कन्या उतत्वयावयं धाराउदन्याइवातिगाहेमहिद्विषः ॥ ९ ॥

**भाष्यं**—कन्यलाकन्यापितृभ्यः पितृभ्रातृप्रभृतिभ्यः अप तान्परित्यज्य पतिलोकं पतिगृहं आगत्य पतीयं पतिसंबंधिनीं दीक्षामयष्ट इष्टवती उतअपिच कन्यात्वया सहएकत्रीभूताः उदन्याधाराः उदकधाराः इव बलवंतो वेगवंतः परस्पर भेदशून्यास्तादात्म्य भावाश्चवयंद्विषः द्वेष्टॄन्अतिगाहेमहि अतिक्रांत्य विलोडयामः उद्वेजायामः ॥ ९ ॥

**गो० गृ० २ प्र० २ कां० ११ सू०.**

शूर्पेणशेषमग्नावोप्य प्रागुदीची मभ्युत्क्रामयंत्येक मिषइति ॥ ११ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

एकमिषे विष्णुस्त्वानयतु ॥ द्वेऊर्जेविष्णुस्त्वानयतु ॥ त्रीणिव्रताय विष्णुस्त्वानयतु ॥ चत्वारिमायोभवायविष्णुस्त्वानयतु ॥ पंचपशुभ्यो विष्णुस्त्वानयतु ॥ षड्रायस्पोषाय विष्णुस्त्वानयतु ॥ ६ ॥ सखासप्तपदीभव सख्यंतेगमेय ूंसख्यंतेमायोषाः सख्यंतेमायोष्ट्याः ॥ ७ ॥

**गो० गृ० २ प्र० २ कां० १६ सू०.**

अवसिक्तायाः सव्येनपाणिनाऽञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना

दक्षिणं पाणिं सांगुष्टमुत्तानं गृहीत्वैनाः षट्पाणिग्रहणीया जपति-गृभ्नामितइति ॥ १६ ॥

**सा० मं० ब्रा० १ प्र० २ ख० म०.**

गृभ्नामिते सौभगत्वाय हस्तं मयापत्या जरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ १० ॥ अघोरचक्षुरपतिघ्न्येधि शिवापशुभ्यस्सुमनाः सुवर्चाः ॥ वीरसूर्जीवसूर्देव कामास्योनाशंनोभव द्विपदेशं चतुष्पदे ॥ ११ ॥ आनःप्रजां जनयतु प्रजापतिराजरसा यसमनक्त्वर्यमा ॥ अदुर्मंगलीः पतिलोकमाविशशंनो भवद्विपदेशं चतुष्पदे ॥ १२ ॥ इमांत्वमिंद्रमीढ्वः सुपुत्रां ऽ सुभगांकधि ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकुरु ॥ १३ ॥ संम्राज्ञीश्वशुरेभव संम्राज्ञीश्वश्र्वांभव ॥ ननांदरि संम्राज्ञीभव संम्राज्ञीअधिदेवृषु ॥ १४ ॥ ममव्रतेते हृदयंदधातु ममाचित्त मनुचित्तंतेअस्तु ॥ ममवाचमेकमनाजुषस्व बृहस्पतिस्त्वानियुनक्तुमह्यं ॥ १५ ॥

**गो० गृ० २ प्र० ३ कां० ६ सू०.**

प्रोक्तेनक्षत्रे षडाज्याहुतीर्जुहोति—लेखासंधिष्विव्येतत्प्रभृतिभिः ॥ ६ ॥

**सा० मं० ब्रा० १ प्र० ३ ख० म०.**

लेखासंधिषुपक्ष्मस्वारोकेषुचयानिते ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ १ ॥ केशेषुयच्चपापकमीक्षितेरुदितेचयत् ॥ तानि * * ॥ २ ॥ शीलेषुयच्चपापकं भाषितेहसितेचयत् ॥ तानि * * ॥ ३ ॥ आरोकेषु चदंतेषुहस्तयोः पादयोश्चयत् ॥ तानि * * ॥ ४ ॥ ऊर्वोरुपस्थे जंघयोः संधानेषुचयानिते ॥ तानि * * ॥ ५ ॥ यानिकानिचघोराणि सर्वांगेषुतवाभवन् ॥ पूर्णाहुतिभिराज्यस्य सर्वाणितान्यशीशमं ॥ ६ ॥

**गो० गृ० २ प्र० ३ कां० सू०.**

ध्रुवमसिध्रुवाहं पतिकुलेभूयासममुष्यासाविति पतिनामगृण्हीयादात्मनश्च ॥
॥ ९ ॥

ऋत्धाहमस्मीत्येवमेव ॥ ११ ॥

अथै नामनुमंत्रयते ध्रुवाद्यौरित्येतयर्चा ॥ १२ ॥

**सा० मं० ब्रा० १ प्र० ३ ख० म०.**

ध्रुवाद्यौः ध्रुवापृथिवी ध्रुवंविश्वमिदंजगत् ॥ ध्रुवासः पर्वताइमे ध्रुवास्त्री पतिकुलेइयं ॥ ७ ॥

**गो० गृ० २ प्र० ३ कां० १३ सू०.**

अनुमंत्रिता गुरुं गोत्रेणाभिवादयते ॥ १३ ॥

**भाष्यं**—अनुमंत्रितैव वधू रभिवादयते * * * पितृगोत्रेण * * सप्तमेपदेगतायां वध्वांपाणिग्रहण मंत्राणां निष्टांस्मरति * * वृत्तायांखलु चतुर्थ्यांतयैवत्वगादि संसर्गादेकमूर्तित्वं निष्पन्नं ॥

**गो० गृ० २ प्र० ३ कां० १५ सू०.**

तावुभौतत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौसह-शयीयातां ॥ १५ ॥

**भाष्यं**—तावुभौदंपतीतत्प्रभृति विवाहकर्मारभ्य * * त्रिरात्रं तिस्त्रोरात्र-योयत्रत्रीण्यहोरात्राणि इत्येतत् अक्षारलवणाशिनौ॥गोक्षीरं गोघृतं चैव धान्यंमुद्गास्तिलायवाः ॥ अक्षारलवणाह्येते क्षाराश्चान्ये प्रकीर्तिताः ॥ इति स्मृत्युक्तलक्षणं अशितुंशीलंययोः तौ अक्षार लवणाशिनौस्यातां * * ब्रह्मचारिणौ चस्यातांदंपती * * ब्रह्मचर्य मिहव्यवायवर्जनमुच्यते ॥

**सा० मं० ब्रा० १ प्र० ३ ख० म०.**

इहधृति रिहस्वधृति रिहरंति रिहरमस्व ॥
मयिधृतिमयिस्वधृति मयिरंतिर्मयिरमोमयिरमस्व ॥ १४ ॥

**गो० गृ० २ प्र० ५ कां० १ सू०.**

अथातश्चतुर्थीकर्म ॥ १ ॥

**भाष्यं**—अथेतिपूर्वप्रकृतार्थ—अथ विवाहरात्रे या चतुर्थीरात्रिः तस्यांकर्म चतुर्थीकर्म वर्तिष्यते—इति सूत्रशेषः—

* * * *

विवाहे चैवनिर्वृत्ते चतुर्थे हनिरात्रिषु ।
एकत्वमागताभर्तुः पिंडे गोत्रेच सूतके ॥ इति ।

चतुर्थी होममंत्रेणत्व ङ्मांसहृदयेंद्रियैः । भर्त्रासंयुज्यतेपत्नी तद्गोत्रातेनसाभवेत् ॥ इति चानयोर्वचनयोस्तत्पर्या पर्यालोचनयाप्येतदवगम्यते—अत्रखल्वेकत्रवचने चतुर्थेहनिरात्रौ गोत्रैक्य मनुशिष्यते ॥

**गो० गृ० २ प्र० ५ कां०.**

तेनैनाꣳसकेशनखानभ्यज्य स्नापयित्वाऽऽप्लावयंति ॥ ६ ॥
ऊर्ध्वं त्रिरात्रात्संभवइत्येके ॥ ७ ॥

**भाष्यं**—प्रकृतात् त्रिरात्रादूर्ध्वं परतः संभवत्यनेन इति संभवः संभोगः व्यवायः कर्तव्यः इत्येके आचार्याः मन्यंते * * * यद्यजात लोम्न्येवातीव पुरुषोपभोगाभिलाषिणीभवति तर्हित्रिरात्रादूर्ध्वं तद्रक्षार्थं संभवितव्यं * * * विनापि ऋतुकालंस्त्रीणां रक्षार्थं संभवितव्यं ॥

**गो० गृ० २ प्र० ५ कां०.**

यदर्तुमती भवत्यु परतशोणिता तदासंभवकालः ॥ ८ ॥ दक्षिणेन

पाणिनोपस्थमभिमृशोद्विष्णुर्योनिं कल्पयत्वित्ये तयर्च्चागर्भंधेहि सिनीवाली-तिच ॥ ९ ॥ समाप्यर्चौसंभवतः ॥ १० ॥

**भवदेवभट्ट धृतमनुः**

विवाहे चैव निर्वृत्ते चतुर्थेहानि रात्रिषु ।
एकत्व मागता भर्तुः पिंडे गोत्रेच सूतके ॥

**बृहस्पतिः**

पाणिग्रहणिका मंत्राः पितृगोत्रापहारकाः ।
भर्तृगोत्रेण नारीणां देयं पिंडादिकं ततः ।
चतुर्थी होम मंत्रेण त्वङ्मांस हृदयेंद्रियैः ।
भर्त्रा संयुज्यते पत्नी तद्गोत्रातेन साभवेत् ॥

**पराशर धर्मशास्त्रे अ० ३ श्लो० २७, २८.**

" नोदकेन न वा वाचा कन्यायाः पतिरूच्यते ।
पाणिग्रहण संस्काराग्नि यतंपति लक्षणं ॥
पाणिग्रहणमात्राणां दाराद्या रक्षणेषुच ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे " ॥

**लिखित संहितायां प० ३७७.**

" विवाहे चैव निर्वृत्ते चतुर्थे हनिरात्रिषु ।
एकत्वं सागता भर्तुः पिंडे गोत्रे च सूतके ।
स्वगोत्राभ्द्रश्यते नारी उद्वाहात्सप्तमे पदे ।
भर्तृगोत्रेण कर्तव्यं दानं पिंडोदक क्रिया " ॥

**यमः प० २९ श्लो० ७८, मुंबई.**

स्वगोत्राभ्द्रश्यते नारी विवाहात्सप्तमे पदे ॥ स्वामिगोत्रेण कर्तव्या तस्याः पिंडोदक क्रिया ॥ ७८ ॥ * * * ॥ अनूढानपृथक्कन्या पिंडे

गोत्रेच सूतके ॥ पाणिग्रहण मंत्राभ्यां स्वगोत्राभ्द्रश्यते ततः ॥ ८४ ॥
येन येनतु वर्णेनया कन्या परिणीयते ॥ तत्समं सूतकं याति तथा
पिंडोदकेपिच ॥ ८५ ॥ विवाहे चैव संवृत्ते चतुर्थे हनिरात्रिषु ॥
एकत्वं सात्रजेभ्द्रर्तुः पिंडेगोत्रेच सूतके ॥ ८६ ॥

**श्रीमहाभारततात्पर्यनिर्णये विंशतितमेध्याये.**

तत्रापश्यत्कन्यका भूमिपानां भौमानीताः समरेतान्विजित्य ॥
व्द्यष्टौसहस्त्राणि शतंचरूपशीलोदाराअक्षताःस व्द्रतस्थाः॥ १ १ १॥

**औशनसः प० ५२६.**

स्त्रीणाम संस्कृतानांतुप्रदानात्परतः पितुः ॥
सपिंडानां त्रिरात्रं स्यात् संस्कारो भर्तुरेवच ॥
अहस्त्वदत्तकन्यानामशौचं मरणेस्मृतं ॥

**प० ५२७**—गृहेमृतासुदत्तासु कन्यकासुत्र्यहंपितुः ॥
परपूर्वासु भार्यासु पुत्रेषु कुलजेषुच ॥
त्रिरात्रंस्यात्तथा चार्ये भार्यासुप्रत्यगासुच ॥

**संस्कार कौस्तुभे—प० २०७.**

मंत्रैर्यदिनसंस्कृतेति सप्तमपदादिक्रमेणमंत्रांतामंत्राविवाक्षिताः तत्रैव भार्यात्वोपपत्तेरिति माधवः ॥

**प० २२५.** प्रतिगृहीतायामस्यां वध्वां भार्यात्वसित्धये—गृह्याग्निसित्धयेच विवाह होमं करिष्ये—इति संकल्प्य ॥

**इतिपूर्वोक्तवचनैः संभवात् परतः चतुर्थी होमानंतरमेव भार्यात्वसित्धिर्भवतीतिज्ञायते ॥**

**८. कन्यादानं तु सकृदेव कर्तव्य मितिसाधारणो नियमः ।**

**तथाहि, मनुः अ० ९ श्लो० ४७.**

" सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् " ॥

**७१ श्लोकेच.**

" न दत्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।
दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतं " ॥

**विष्णुः अ० ५ प० ८२.**

" यः कन्यां पूर्वदत्तामन्यस्मै दद्यात् । स चौरवत् शास्यः " ॥

**अग्निपुराणे, अ० १५४ श्लो० ३.**

" सकृत्कन्या प्रदातव्याहरंस्तां चौरदंडभाक् " ॥

**९. अस्यशास्त्रस्य अपवादो वर्तते** ॥ भर्त्तरि नष्टे मृते प्रव्रजिते क्लीबे पतिते वा दत्ता कन्या अन्यस्मै दानयोग्या भवति । सादिधिषुणासह पुनःसंस्कर्तुं योग्याभवतितथापि पुनर्भूरिति उच्यते, संस्कृतत्वात् तत्पुनर्भर्तुः धर्मपत्नी भवति तयोः पुत्राः पौनर्भवा अपि " दायादाः " महतोभयात्त्रातारोभवंति ॥

**अत्राहुः मनुः अ० ९ श्लो० ९७.**

" कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते " ॥

**श्रीनंदनः** ॥ " अनुमत्यभावे अन्यस्मै देया सकृत्कन्या प्रदीयते इत्यस्य अयमपवादः " ।

**वशिष्ठः अ० १७ प० ४८९.**

" अद्भिर्वाचा च दत्तायां म्रियेताथो वरो यदि ।
न च मंत्रोपनीता स्यात् कुमारी पितुरेव सा ॥

यावच्चेदाहृता कन्या मंत्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैवसा " ॥

**अग्निपुराणे अ० १५४ श्लो० ५६.**

" नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ।
मृते तु देवरे देयात् तदभावे यथेच्छया " ॥

**कात्यायनः**—" स तु यद्यन्यजातीयः पतितः क्लीब एव च- ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोपि वा ।
ऊढापि देया सान्यस्मै सप्रावरणभूषणा " ॥

**शातातपः**—" वरश्चेत् कुलशीलाभ्यां नयुज्येत कदाचन ।
न मंत्राः कारणं तत्र नच कन्यानृतं भवेत् ।
समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकां ।
पुनः गुणवते दद्यात् इति शातातपोब्रवीत् " ॥

**धर्मसिंधौ, भा० १ प० ३ प० ५९.**

" सप्तपदीविधेः पूर्वं आद्यानांतिसॄणां ( मनोदत्तानां वाचादत्तानां-अग्निपरिगतानां ) संकटे अन्येन विवाहो भवति ।

**प० ५७.** ब्राह्मादिष्वपि कन्यादानोत्तरमपि, सप्तपदीविधेः पूर्ववरस्य षंडत्वादि दोषज्ञाने वरमृतौवा कन्या अन्यस्मै देया " ।

**मनुः अ० ९ श्लो० ८६ आपत्धर्मे.**

" प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योष्टौ नरस्समाः ।
विद्यार्थं षड्यशोर्थंवा कामार्थंत्रीं स्तुवत्सरान् " ॥

**श्रीनंदनः**

" ऊर्ध्वंभर्त्रंतरपरिग्रहे न दोषोस्तीत्यभिप्रायः यत्तुमृतभर्तृकाणां ब्रह्मचर्यवचनात् फलातिशय कामानां। नान्यासां इत्यविरोधः " ॥

**माधवेनोदाहृतोमनुः**

" नष्टे मृते प्रव्रजिते क्लीवेच पतितेपतौ ।
पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

**माधवः**—" परिवेदन पर्याधानयोरिव स्त्रीणां पुनरुद्वाहस्यापि प्रसंगात्
क्वचित् अभ्यनुज्ञांदर्शयति-नष्ट इति " ।

**मनुः अ० ९ श्लो० १७५—१७६.**

" यापत्यावा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा सपौनर्भव उच्यते ।
सा चे दक्षतयोनिःस्यात् गतप्रत्यागतापिवा ।
पौनर्भवेन भर्त्रा सापुनः संस्कारमर्हति " ॥

**पराशरः**—" कृतेतु मानवो धर्मः त्रेतायां गौतमः स्मृतः ।
द्वापरे शंखलिखितौ कलौपाराशरःस्मृतः ॥ २४ ॥ अ० १
अतःपरं गृहस्थस्य धर्माचारं कलौयुगे ।
धर्मं साधारणं शक्यं चातुर्वर्ण्या श्रमागतं ।
संप्रवक्ष्याम्यहंभूयः पाराशर्यप्रचोदितः ॥ १२ ॥ अ० २
गते मृते प्रव्रजिते क्लीवेच पतितेपतौ ।
पंचा पत्सुच नारीणां पतिरन्यो विधीयते ॥ ३१ ॥ अ० २

**विष्णुः**—**अ० १५ प० ९२—९३.**

अथ द्वादशपुत्रा भवंति * औरसः प्रथमः * क्षेत्रजो द्वितीयः। पुत्रिका पुत्रस्तृतीयः * * पौनर्भवः चतुर्थः अक्षताभूयः संस्कृता पुनर्भूः, भूयस्त्वसंस्कृतापि परपूर्वा । * दत्तकश्चाष्टमः * * * ऐतेषां पूर्वःपूर्वः श्रेयान्—" सएवदायहारः, सचान्यान्बिभृयात् " ।

**याज्ञवल्क्यः अ० १ प० ४१९.**

" दत्तामपिहरेत्पूर्वाच्छ्रेयांश्चेद्वरआव्रजेत् " ।

**अ० २ प० ४९३ श्लो०.**

" औरसोधर्मपत्नीज स्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणे तरेण वा ॥ १३१ ॥
अक्षतायांक्षतायां वा जातः पौनर्भवस्तथा ।
दद्यान्माता पितावायं स पुत्रो दत्तको भवेत् ॥ १३३ ॥
पिंडदोंशहरश्चैषां पूर्वाभावे परःपरः ॥ १३९ ॥

**वशिष्ठः अ० १७ प० ४८७, ४८८, १८९.**

बव्हीनां द्वादशह्येव पुत्राः पुराणदृष्टाः । स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः । तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः। तृतीयः पुत्रिका विज्ञायते ॥ पौनर्भवश्चतुर्थः । पूनर्भूः कौमारं भर्तारमुत्सृज्यान्यैः सहचरित्वा तस्यैव कुटुंबमाश्रयति सा पुनर्भूर्भवति । या च क्लीवं पतित मुन्मत्तंवा भर्तारमुत्सृज्यान्यं पतिं विंदते मृते वा सा पूनर्भू र्भवति । कानीनः पंचमो या पितुर्गृहेऽसंस्कृताकामादुत्पादयेन्मातामहस्यपुत्रोभवतीत्याहुः । गुढेच गुढोत्पन्नः षष्टः इत्येते दायादाः बांधवास्त्रातारो महतो भयादित्याहुः । * * * क्लीवोन्मत्तानां प्रेतपत्नी षण्मासं व्रतचारिण्य- क्षारलवणं भुंजाना शयीतोर्ध्वं षड्भ्योमासेभ्यः स्नात्वा श्रात्धंच पत्ये दत्वा विद्याकर्मगुरुयोनिसंबंधान् सन्निपात्य पिता भ्राता वा नियोगं कारयेत् तपसे वोन्मत्तामवशांव्याधितां वा नियुंज्यात् ज्यायसीमपि षोडशवर्षां नचेदामयाविनीस्यात् प्राजापत्ये मुहूर्ते पाणिग्रहणवदु पचारोऽन्यत्र संस्थाप्य वाक्पारुष्याद्दंडपारुष्याच्च ग्रासाच्छादनस्नान- लेपनेषु प्रागूयामिनीस्यादनियुक्तायामुत्पन्न उत्पादयितुः पुत्रोभवती-

त्याहुः । स्याच्चेन्नियोगिनो दृष्टा लोभान्नास्तिनियोगः प्रायश्चितं वाप्युप-
नियुंज्यादित्येके ॥ अथाप्युदाहरंति ॥

" पाणिग्रहे मृते बाला केवलं मंत्रसंस्कृता ।
सा च त्वक्षतयोनिः स्यात् पुनः संस्कारमर्हतीति " ॥

**श्रीमहाभारते आदिपर्वणि अ० १२० श्लो०.**

**पांडुरुवाच**—इमेवैबंधुदायादाः षट्पुत्रा धर्मदर्शने ॥
षडेवाबंधुदायादाः पुत्रास्ताञ्छृणुमे पृथे ॥ ३२ ॥
स्वयंजातः प्रणीतश्च परिक्रीतश्चयः सुतः ॥
पौनर्भवश्चकानीनः स्वैरिण्यांयश्चजायते ॥ ३३ ॥
दत्तःक्रीतः कृत्रिमश्च उपगच्छेत्स्वयंचयः ॥
सहोढोज्ञातिरेताश्च हीनयोनि धृतश्चयः ॥ ३४ ॥
पूर्वं पूर्वतमाभावं मत्वालिप्सेतवैसुतं ॥
उत्तमाद्देवरात्पुंसः कांक्षंते पुत्रमापदि ॥ ३५ ॥
अपत्यं धर्मफलदं श्रेष्टं विंदंति मानवाः ॥
आत्मशुक्रादपिपृथे मनुःस्वायं भुवोब्रवीत् ॥ ३६ ॥

अ० १२२.—पतिव्रता मेतदेवभविता पातकंभुवि ॥
पत्यानियुक्तायाचैव पत्नीपुत्रार्थ मेवच ॥ १९ ॥
नकरिष्यति तस्याश्च भविष्यतितदेवहि ॥
इतितेन पुराभीरु मर्यादा स्थापिताबलात् ॥ २० ॥
उद्दालकस्य पुत्रेण धर्म्यांवै श्वेतकेतुना ॥
सौदासेनचरंभोरु नियुक्ता पुत्रजन्मनि ॥ २१ ॥
मदयंती जगामर्षिंवसिष्टमितिनः श्रुतं ॥
तस्माल्लेभेचसापुत्र मश्मकं नामभाविनी ॥ २२ ॥

एवंकृतवती सापिभर्तुः प्रियचिकीर्षया ॥
अस्माकमपिते जन्मविदितं कमलेक्षणे ॥ २३ ॥
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृध्दये ॥
अतएतानि सर्वाणि कारणानि समीक्ष्यवै ॥ २४ ॥
ममैतद्वचनंधर्म्यं कर्तुमर्हस्य निंदिते ॥
ऋतावृतौ राजपुत्रि स्त्रिया भर्तापतिव्रते ॥ २५ ॥

अ० १२३.—पांडुस्तुपुनरेवैनां पुत्रलोभान्महायशाः ॥
वक्तुमैच्छत्धर्मपत्नीं कुंतीत्वेनमथाब्रवीत् ॥ ७६ ॥
नातश्चतुर्थं प्रसवमापत्स्वपिवदंत्युत ॥
अतःपरं स्वैरिणीस्यात् बंधकीपंचमेभवेत् ॥ ७७ ॥
सत्वंविद्वन् धर्ममिम मधिगम्यकथंनुमां ॥
अपत्यार्थं समुत्क्रम्य प्रमादादिवभाषसे ॥ ७८ ॥

**श्रीभारते भीष्मपर्वणि अ० ९० श्लो०.**

अर्जुनस्यात्मजः श्रीमानिरावांन्नामनामतः ॥
सुतायां नागराजस्यजातः पार्थेनधीमता ॥ १ ॥
ऐरावतेन सादत्ताह्यनपत्यामहात्मना ॥
पत्यौहते सुपर्णेन कृपाणादीनचेतना ॥ २ ॥
भार्यार्थंतांचजग्राह पार्थःकामवशानुगां ॥

**श्रीमहाभारततात्पर्यनिर्णये अ० २० श्लो०.**

कुर्वन्स्नानं माययानागवध्वाहृतोलोकं भुजगानांक्षणेन ॥
तस्याःपितागरुडेनात्तपत्युः पुत्राकांक्षी चोदयामासपार्थं ॥ १९९॥

**नारदः**

" उद्वाहितापि सा कन्या नचेत्संप्राप्तमैथुना ॥
पुनः संस्कारमर्हेत यथाकन्या तथैवसा ॥

**नारदः अ० १२ श्लो०.**

नष्टेमृते प्रव्रजिते क्लीबेच पतितेपतौ ॥
पंचस्वापत्सुनारीणां पतिरन्यो विधीयते ॥
अष्टौवर्षाण्यपेक्षेत ब्राह्मणीप्रोषितंपतिं ॥ ९७ ॥
अप्रसूतातुचत्वारि परतोन्यंसमाश्रयेत् ॥
क्षत्रियाषट्समास्तिष्टेदप्रसूता समात्रयं ॥ ९८ ॥
वैश्याप्रसूताचत्वारि द्वेवर्षेत्वितरावसेत् ॥
नशूद्रायाः स्मृतःकाल एषप्रोषितयोषितां ॥ ९९ ॥
जीवतिश्रूयमाणे तुस्यादेष द्विगुणोविधिः ॥
अप्रवृत्तौतु भूतानां दृष्टिरेषा प्रजापतेः ॥ १०० ॥
अतोन्यगमनेस्त्रीणा मेषदोषो नविद्यते ॥

**वौधायनः**

निसृष्टोवाहृतो वापियस्या भर्ताम्रियेतवा ॥ साचेदक्षतयोनिःस्यात् गतप्रत्यागतापिवा ॥ पौनर्भवेन विधिनापुनः संस्कारमर्हति ॥

**शास्त्रप्रदीपोत्धृतस्मृतिः** ॥ पंचत्वंचेद्वरोगच्छेत्वाग्दानेतु कृतेसति ॥ कन्यान्यस्मै प्रदातव्या तथासप्तपदात्परं ॥

**श्रीमन्महाभारततात्पर्यनिर्णयस्य—चतुर्थाध्यायस्य दशम श्लोकस्य व्याख्याने.—श्रीमन्मध्वमतानुयायिभिः चेट्टिकोनेर्याचार्यैः उदाहृतास्मृतिः—**

नष्टेमृते प्रव्रजिते क्लीबेच पतितेपतौ ।
पंचस्वापत्सुनारीणां पतिरन्यो विधीयते ॥

**ऋग्वेदः अ० ८ मं० १० सूक्त १०९.**

तेऽवदन्प्रथमा ब्रह्म किल्बिषेऽकूपारःसलिलो मातरिश्वा ।
वीळुहरास्तप उग्रो मयो भूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्यानिनाय ॥ २ ॥
हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचंन् ।
न दूताय प्रह्येतस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥
देवा एतस्यामवदंत पूर्वे सप्त ऋषयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमेव्योमन् ॥ ४ ॥
ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमंगं ।
तेन जायामन्वविंद ब्दृहस्पतिः सोमेन नीतां जुत्व्हा॑ नदेवाः ॥ ५ ॥
पुन वैंदेवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ ६ ॥
पुनर्दाय ब्रह्मजायां कृत्वीदेवैर्निकिल्बिषं ।
ऊर्जंपृथिव्या भत्क्कायोरुगायमुपासते ॥ ७ ॥

**सायनः** " अत्रेतिहासमाचक्षते जुहूरिति । वाग्नामा सा ब्रह्मणो जाया च बृहस्पतेर्वाचस्पातित्वात् बृहस्पतेर्जुहूः नाम भार्या बभूव । कदाचिदस्य किल्विषमस्याः दौर्भाग्यरूपणासांचक्रे । अतएव सएनां पर्यत्याक्षीत् । अनंतरमादित्यादयो देवा मिथो विचार्यैनामकिल्बिषां कृत्वा पुनर्बृहस्पतये प्रादुरिति " ॥

तदत्रवर्ण्यते प्रथमामुख्यास्तेदेवाः ब्रह्मकिल्बिषे ब्रह्मणोबृहस्पतेः किल्बिषेपापे जुव्हूदौर्भाग्यरूपे विषयेऽवदन् निष्कृत्युपायमवोचंन् केते अकूपारः । अत्रयास्कः । आदित्योप्यकूपारउच्यते अकूपारोभवतिदूरपारः नि० ४-१८ । इति अकुत्सितपारोमहागतिरादित्यः सलिलोऽब्देवतावरुणः मातरिश्वा वायुर्वीलुहराः हरति विनाशयति तमांसीतिहरः तेजः प्रभूततेजस्कः तपः तपसातापनेनोग्रउद्गूर्णोग्निः मयोभूः सुखस्यभावयिता सोमः पेवीःदेव्य आपः कीदृश्यः ऋतेनसत्यभूतेनब्रह्मणा प्रथमजा आदितएवो-

त्पादिताः एतउपायमुक्का प्रायश्चित्तमप्यकारयंन्निितिभावः ॥ १ ॥ प्रथमोमुख्यः सोमः राजाहृणीयमाणः पापापगमनेनालज्जमानःसनूतामे-नामकिल्बिषांब्रह्मजायां पुनर्बृहस्पतये प्रायच्छत् ततोवरुणो अन्वर्तिता सोममनुमोदयिताऽसीत् सर्वथात्वं परिगृहाणेति दयामकार्षीत् तथामित्रश्च अनंतरंहोता देवानामाव्हाता मनुष्यणां होमनिष्पादको वाऽग्निर्हस्तगृह्यतां हस्तेगृहीत्वानिनाय अनैषीत् प्रादादित्यर्थः ॥ २ ॥ देवाबृह-स्पतिमूचुः हे वृहस्पते अस्याआधिः आधीयंतआभरणान्यत्रेत्याधिः शरीरं अस्याः शरीरं हस्तेनैवग्राह्योगृहीतव्यमेव पुनस्तेदेवा इदानीमियं ब्रह्मजायेत्येवाऽवोचंन् अवादिषुः चशद्वश्चेदर्थे अतएव एषाब्रह्मजाया पुराप्रह्ये प्रहितायत्वया भार्यान्वेषणार्थं प्रेषितायदूताय तथानतस्थे स्वात्मा-नंनप्रकाशयति तत्रदृष्टांतः यथाक्षत्रियस्यराज्ञोगुपितं रक्षितं राष्ट्रंराज्यं शत्रवेयथा नप्रकाशयति तद्वदसौदौर्भाग्ययुक्ततया तस्मैस्वात्मानं नप्रका-शितवतीइदानींतु तद्राहित्येन प्रकाशमानेयं ब्रह्मजायैवेत्यब्रुवंन् ॥ ३ ॥ पूर्वेचिरंतनादेवा आदित्यादयः एतस्यांविषयेअवदंत इयंपापरहितेत्यवादिषुः तथायेसप्तर्षयः सप्तसंख्याकाऋषयः तपसेतपश्चरणाय निषेदुः निषण्णा-बभूवुः तेप्यवादिषुः ततोभीमा शत्रुरूपाणां पापानां भयंकरी पतिवल्येषा जायाब्राह्मणस्यवृहस्पते रुपनीतासमीपेदे वैः स्थापिता तथाहि । तपःप्रभावो दुर्धांदुर्धानामपि परमेव्योमंन् व्योमन्युत्तमेस्थाने दधाति विदधातिखलु तस्मादेनामपि देवतापरिग्रहरूपस्तपोमहिमाबृहस्पते रंतिकेस्थापयति ॥ ४ ॥ बृहस्पतिर्मामलभतेति जुहूः परोक्षयावदति हेदेवाः पूर्वं स ब्रह्मचारी जाया भावेन ब्रह्मचारीचरति अतएव विषः सर्वेषु यज्ञेषु व्याप्तवान् देवान्वे-विषत् । स्तुतिभिर्हविर्भिश्च व्याप्नुवंन् देवानामेकमंगंभवति जायापती यज्ञस्य द्वे अंगेखलु * * तेन देवानां परिचरणेन वृहस्पतिर्जायां जुहू-नामिकां मामन्वविंदत् । अनुगम्यालभत । नशद्वउपमार्थे । पूर्वं यथा सोमेन नीतां सोमोददद्गंधर्वायेत्यादिक्रमेण नीतां जुन्हं जुहूं यथा लब्ध-

वान् तद्वदिदानीमपि ॥ ५ ॥ लाभहेतुमाह । देवा ब्रह्मजायां जुहूं बृहस्पतयेपुनरददुः वैशद्वः प्रसित्धवाची उताप्यर्थे मनुष्या अपि पुनरददुः । एवं देवमनुष्यैः कृतं दानं सत्यं यथार्थं कृण्वानाः कुर्वाणाः राजानोऽपि पुनस्तस्मै ददुः एवमव्यवहार्यनिमित्तं पापमपि व्यनाशयन्नि-तिभावः ॥ ६ ॥ देवैः देवा निकिल्बिषं तस्याः किल्बिषाभावं कृत्वी कृत्वा ब्रह्मजायां ब्रह्मणो बृहस्पतेर्भार्यां पुनर्दाय पुनर्दत्वा * * पृथिव्या ऊर्जं रसभूतमन्नं हवीरूपं भक्काय * भक्का विभज्योरुगायं बहुकीर्ति बहुभिः स्तोतव्यं वा बार्हस्पत्यं यज्ञमुपासते सेवंते ॥ ७ ॥ **अत्र अथर्ववेदस्य ५–१७–द्रष्टव्यं.**

**ऋग्वेदे म० १० सू० ४० ऋ० २.**

कुहस्विद्दोषा कुहवस्तोरश्विनाकुहाभिपित्वं करतः कुहोषतुः ॥
कोवांशयुत्रा विधवेवदेवरं मर्यंन योषा कृणुतेसधस्थआ ॥ २ ॥

**सायनः**—हे अश्विनाश्विनौ कुहस्वित् क्वचिद्दोषा रात्रौ भवथ इतिशेषः । कुहवस्तोः क्वादिवाभवथः कुहक्वाभिपित्वमाभिप्राप्तिंकरतः कुरूथः कुहक्वोषथुः वसथः किंचवां युवांकोयजमानः सधस्थे सहस्थाने वेद्याख्य आकृणुते आकुरुते परिचरणार्थमात्माभिमुखी-करोति तत्रदृष्टांतौदर्शयति शयुत्रा शयने विधवेव यथामृतभर्तृका नारीदेवरं भर्तृभ्रातर मभिमुखीकरोति मर्यंन यथाच सर्वं मनुष्यं योषा सर्वानारी संभोगकालेऽभिमुखीकरोति तद्वदित्यर्थः तथाच यास्कः क्वस्विद्रात्रौभवथः क्वदिवा क्वाभिप्राप्तिंकुरुथः क्ववसथः कोवां शयने विधवेव देवरंदेवरः कस्माद्द्वितीयोवर उच्यते विधवा विधातृकाभवति विधवनाद्वा विधावनाद्वेति चर्मशिराअपिवाधव इतिमनुष्यनाम तद्वियोगाद्विधवा देवरोदीव्यतिकर्मामर्यो मनुष्यो मरणधर्मा योषायौतेराकुरुते सधस्थाने नि० ३–१५ । इति ॥

**अंतेष्ट्यां**—चित्युपरिदाक्षिणाशिरसं निधाय उत्तरतःपत्नींच ॥ इमानारी-
शंखःपित्र्यस्त्रिष्टुप्पत्नीचित्यारोहणेविनियोगः ॥ इमानारीरविधवाः
सुपत्नीरांजनेनसर्पिषासंविशंतु ॥ अनश्रवोऽनमीवाःसुरत्ना आरो-
हंतु जनयो योनिमग्रे ॥ पत्नींचितिमारोप्य——उदीर्ष्वनारी
दमनोग्नि स्त्रिष्टुप्—पत्नीचित्यावरोहणे विनियोगः ॥ उदीर्ष्व-
नार्यभि जीवलोकं गतासुमेत मुपशेष एहि ॥ हस्तग्राभस्य-
दिधिषो स्तवेदंपत्युर्जनित्वमाभिसंबभूथ—इतिमंत्रेण भूतले पत्नीं
अवरोहयेत्—देवरोते वासीवाभूतले आवरोहयेत् ॥

**आ० गृ० सू० ४—२—१६** " उत्तरतः पत्नीं "

**भाष्यं**—एतावद्वर्णत्रयस्यापिसमानं.

**सायनः**—देवरादिकः प्रेतपत्नीमुदीर्ष्वनारीत्यनया भर्तृसकाशादुत्थापयेत् ।
सूत्रितंच ॥

**ऋग्वेदे मं० १० सू० १८.**

उदीर्ष्वनार्यभिजीवलोकं गतासुमेत मुपशेषएहि । हस्तग्राभस्यदि-
धिषोस्त्वमेतपत्युर्जनित्वमभिसंबभूथ ॥ ८ ॥

धनुर्हस्तादाद दानोमृतस्यास्मे क्षत्राय वर्चसे बलाय । अत्रैवत्वमि
हवयंसुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥

**सायनः**—हे नारि मृतस्यपत्नि जीवलोकं जीवानां पुत्रपौत्रादीनां
लोकं स्थानं गृहमभिलक्ष्योदीर्ष्व । अस्मात्स्थानादुत्तिष्ट
ईरगतौ आदादिकः गतासुमपक्रांतप्राणमेतंपतिमुपशेषे तस्य
समीपेस्वपिषि तस्मात्त्वमेहि आगच्छ यस्मात् त्वं हस्त
ग्राभस्य पाणिग्राहं कुर्वतः दिधिषोः गर्भस्यनिधातुः तवास्य
पत्युः संबंधादागतमिदं जनित्वं जायात्वमभिलक्ष्य संबभूथ
संभूतास्यसुसरणनिश्चयमकार्षी स्तस्मादागच्छ ॥ ८ ॥

मृतस्य क्षत्रियस्य हस्ताद्धनुराददानः किमर्थं अस्मै अस्माकं क्षत्राय प्रजापालनसमर्थाय बलाय वर्चसे तेजसे बलाय सेनालक्षणाय च धनुराददानाऽहं ब्रवीमीति शेषः किमिति त्वमत्रैव अस्मिन् स्थानएव भव वयं चेहास्मिन् लोके सुवीराः सुपुत्रयुक्ता भवंतो विश्वाः सर्वानभिमाती रभिमन्यमानानूस्पृधः संघर्षयित्रीन् बाधकान् शत्रून् जयेम सहेमहि ॥ ९ ॥

**आ० गृ० सू० ४–२–१८.**

तामुत्थापयेद्देवरः पतिस्थानीयोन्तेवासीजरद्दासोवोदीर्ष्वनार्यभिजीव-लोकामिति ॥

**भाष्यं**–अथपत्नीमुत्थापयेत्–कः–देवरः पतिस्थानीयः सपतिस्थानीय इत्युच्यते-अनेनज्ञायते-पतिकर्तृकं कर्म पुंसवनादि पत्यसंभवे देवरः कुर्यादिति ।

**आपस्तंबीये अंतेष्ट्यां प० ६.**

प्रेतंचितिमारोप्य इयंनारीतिप्रेतपत्नीं प्रेतसमीपंनीत्वा उदीर्ष्वेतिमंत्रेण प्रेतपत्नीं उत्थाप्यततः सुवर्णमितिप्रेतहस्ते सुवर्णेन संमृज्य ॥

**तैत्तिरीये आरण्यके ६ प्रपाठके १ अनुवाकः**

इयंनारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्यप्रेतं । विश्वं पुराण-मनुपालयंती तस्यैप्रजांद्रविणं चेहधेहि ॥ उदीर्ष्वनार्यभिजीवलोक-मितासु मेतमुपशेषएहि । हस्तग्राभस्यदिधिषो स्त्वमेतत्पत्युर्जनित्वमभि-संबभूव ॥ सुवर्णंहस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैवत्वमिह वय ꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ॥ धनु-र्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसेबलाय । अत्रैवत्वमिह वय ꣳ

सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ॥ मणि ँ हस्तादाददाना मृतस्य श्रियैविशे पुष्ट्यैबलाय । अत्रैवत्वमिह वय ँ सुशेवा विश्वास्पृधो अभिमातीर्जयेम ॥ ३ ॥

**सायनः**—हे मर्त्य मनुष्य या नारी मृतस्य तव भार्या सा पतिलोकं वृणाना कामयमाना प्रेतं मृतं त्वां उपनिपद्यते समीपे नितरां प्राप्नोति । कीदृशी पुराणं विश्वं अनादिकालप्रवृत्तं कृत्स्नं स्त्रीधर्मं अनुक्रमेण पालयंती पतिव्रतानां स्त्रीणां पत्या सहैव वासः परमो धर्मः । तस्यै धर्मपत्न्यै त्वं इह लोके निवासार्थमनुज्ञां दत्वा प्रजां पूर्वं विद्यमानां पुत्रादिकां द्रविणं धनं चधेहि संपादय अनुजानी-हीत्यर्थः ॥ हे नारि त्वं इतासुं गतप्राणं एतं पतिं उपशेषे उपेत्य शयनं करोषि उदीर्ष्व अस्मात्पतिसमीपादुत्तिष्ट जीवलो-कमभि जीवंतं प्राणिसमूहमभिलक्ष्य एहि आगच्छ । त्वं हस्त-ग्राभस्य पाणिग्राहवतः दिधिषोः पुनर्विवाहेच्छोः पत्युः एततू जनित्वं जायात्वं अभिसंबभूव आभिमुख्येन सम्यक् प्राप्नुहि ॥ हे नारि त्वं श्रियै संपदर्थं ब्रह्मणे ब्राह्मणजात्यर्थं तेजसे कांत्यर्थं बलाय शरीरबलार्थं मृतस्य पुरुषस्य हस्तात् सुवर्णं आददाना सती अत्रैव लोके तिष्ट वयं अपि इह लोके सुशेवाः सुखं सेवमानाः संतः स्पृधः अस्माभिः सह स्पर्धमानाः विश्वाः अभि-मातीः सर्वान् शत्रून् जयेम ॥ ३ ॥

धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय ॥ अत्रैवत्वमिह वय ँ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति राजन्यस्य । मणिं हस्तादाददाना मृतस्य श्रियैविशे पुष्ट्यै बलाय ॥ अत्रैवत्वमिह वय ँ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति वैश्यस्य इति । १६—१७ एतौ मंत्रौ पूर्वोक्तब्राह्मण मंत्रवत् व्याख्येयौ ॥

**अथर्ववेदे—प० २०४ श्लो० २७.**

या पूर्वं पतिं वित्वाथान्यं विंदतेऽपरं ।
पंचौदनं च तावजंददातोन वियोषतः ॥ २७ ॥
समान लोकोभवति पुनर्भुवापरः पतिः ॥

**काश्यपस्मृतौ.**

सप्तपौनर्भवाः कन्यावर्ज्जनीयाः कुलाधमाः ।
वाचादत्ता मनोदत्ता कृतकौतुक मंगला ॥ १ ॥
उदकस्पर्शकायाच याच पाणिगृहीतिका ।
अग्न्युपायं गतायाच पुनर्बाह्यस्य बालकाः ॥ २ ॥
इत्येताः कश्यपप्रोक्तादहेयुः कुलमग्निवत् ॥
प्ररोहत्यग्निनादग्धं पादपानां कुलंमहत् ॥ ३ ॥

**विज्ञानेश्वरः प० ८ श्लो० ६७.**

अनन्यपूर्विकामित्यत्र अनन्यपूर्वा परिणेयोक्ता तत्रान्यपूर्विका कीदृशीत्याह—अक्षतेति अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणीचेति पुनर्भूरपि द्विविधा क्षताचाक्षताच तत्रक्षता संस्कारात्प्रागेव पुरुषसंबंधदूषिता अक्षतापुनः संस्कार दूषिता ॥

**संस्कारकौस्तुभे प० १७२.**

अन्यपूर्विकाः सप्तविधाः पुनर्भ्वः । वाचादत्ता मनोदत्ता अग्निपरिगता सप्तपदंनीता भुक्ता गृहीतगर्भा प्रसूताचेति बौधायनोक्ताः ॥

**श्रीमन्महाभारततात्पर्यनिर्णये द्वादशाध्याये.**

युधिष्ठिरेजात उवाच पांडुर्बाव्होर्बलात्ज्ञानबलाच्चधर्मः ॥
रक्ष्योन्यथानाशमुपैतितस्माद्बलद्वयाढ्यं प्रसवाशुपुत्रं ॥ ९० ॥

इतीरितेपृथयाहूतवायुः संस्पर्शमात्रादभवद्बलद्वये ॥
सवायुरेवा भवदत्र भीमनामाभृतामाः सकलाहियस्मिन् ॥ ९३ ॥

*　　*　　*　　*　　*

पांडुः पुनः प्राहपृथा मिदंवचः ॥

*　　*　　*　　*　　*

अतोमहेंद्रोबलवानरंतरःतेषां समाव्हानमिहार्हतिस्वराट् ॥ इतीरिता साव्हयदाशुवासवंततःप्रजज्ञे स्वयमेवशक्रः ॥ सचार्जुनोनामनरांशयुक्तो-विष्टण्वावेशी बलवानस्त्रवेत्ता ॥ ९९ ॥

**श्रीमन्महाभारततात्पर्यनिर्णये चतुर्दशाध्याये.**

ऊचुः सुयोधनमुखाः सहसैवबलेन पांडोर्मृतिः किलपुरातनयाः क्षतस्य ॥ ९६ ॥ नक्षेत्रजा अपिमृते पितरिस्वकीयैः सम्यङ्नियोग मनवाप्यभवाययोग्याः ॥ तेषामितीरितवचोनुजगादवायुराभाष्यकौरव गणान्गगनस्थएव ॥ ९७ ॥ एतेहिधर्ममरुदिंद्रभिषग्वरेभ्यो जाताः प्रजीवति पितर्युरुधर्मसाराः ॥ शक्याश्चनैव भवतां क्वचिदग्रहाय नारायणे नसततं परिरक्षितायत् ॥ ९८ ॥ वायोरदृश्य वचनं परिशंकमाने ष्वावि-र्बभूवभगवान्स्वयमब्जनाभः ॥ व्यासस्वरूप उरुसर्व गुणैकदेह आदायतान विशदाशुस पांडुगेहं ॥ ९९ ॥

**पुराणेपि पूर्वोक्तोर्थ अस्तीतिकेचिद्वदंति तथाहि**—ब्रह्मपुराणे—
मृतेभर्तरियानारीत्यक्तवत्यथचस्वयं ॥ सवर्णाज्जनयेद्गर्भंभर्तुः पौनर्भवंसुतं ॥ यदिसाबालविधवाबलाभ्दुक्ताथवाक्वचित् ॥ तथाभूयःस्तुसंस्कार्या गृही-त्वायेनकेनाचित् ॥

१०. मनोदाना नंतरं वा वाग्दानानंतरं वा कन्या अन्यस्मै अनापदि नदातव्या। दत्ताचेत् दाता चोरवत्शास्यः। एवमेव अग्निं परिगता सप्तपदंगता कन्या अनापदि नान्यं आश्रयेत। आश्रिताचेत् जारिणी भवति। इति सर्वे ऋषयः वदंति। आपदितु पूर्वोक्ताः चतुर्विधाः कन्या अक्षतयोनयः पुनः दानयोग्या भवंतीति केचित् ऋषयो वदंति। आपद्यापि ताः दानयोग्याः न भवंतीति केपिनवदंति। ताश्चेत् अक्षतयोनयः स्युः विवाह संस्कारयोग्या इतिचबहवः ऋषयः वदंति। केपिऋषयःताःसंस्कारायोग्या इति नवदंति। यतःपुरुषसंयोगा नंतरमेव ताः भर्तुःगोत्रं आश्रयंतेनतत्पूर्वमिति मन्वादिवचनैः अवगम्यते अतः अक्षतयोनयः पितृगोत्रान् भर्तृसंसर्गात् पूर्वं नविसृजंति। अतः ताः दानयोग्या इतिवक्तुंशक्यंते। दानयोग्या वानवा दिधिषुणा पाणिंगृहीतुंताः योग्या एव। तासांसंततयः अदुष्टाः पौनर्भवाः संस्कृतमातृजातत्वात्। अन्यथातु वयंसर्वे पौनर्भवत्वात् दुष्टाःबभूविम॥

११. एकस्मै मनोदत्ता वाचादत्ता एकेनसह अग्निंपरिगता सप्तपदंगता भुक्ता गर्भंगृहीतवती प्रसूता एवंभूतास्त्री अन्येन विवाहिताचेत् सापुनर्भूरित्युच्यते अस्याः पुत्राः पौनर्भवा इत्युच्यंते आसांसप्तानांमध्ये आद्यंचतुष्टयं संस्कारयोग्यं अतः ताः धर्मपत्न्यः तासांपुत्राः औरसा इवदायादा इति प्रकीर्तितत्वात् अन्यासांतिसृणां संस्कारस्याऽनुक्तत्वात् ताः क्षतयोनयः भुक्ताः गृहीतगर्भाः प्रसूताः पुनर्भ्वः असंस्कृता भवंति तासांपुत्राः पौनर्भवाः श्राद्धादिषुवर्जनीयाः यथा वक्ष्यमाणाः—अनधीयानाः, दुर्बलाः, चिकित्सकाः, देव-लकाः, विपणेनजीवंतः, वार्धुषयः, कुशीलवाः, भृतकाध्या-

**पकाः, भृतकाध्यापिताः, शूद्रगुरवः, वाग्दुष्टाः, पित्राविवदमानाः, मद्यपाः, दांभिकाः, मित्रद्रुहः, द्यूतवृत्तयः, पिशुनाः, आचारहीनाः, क्लीबाः, नित्यंयाचनकाः, कृषिजीविनः, प्रेतनिर्यातकाः, इत्यादयः ॥ (भृगुसंहितायां अ० ३)**

**केचिद्वदंति**—पूर्वोक्तंसर्वं शास्त्रमेव तथापि अस्मिन् कलियुगे पूर्वोक्त श्रुति-स्मृति-सूत्रपुराणादीनां शास्त्रत्वं अपास्तं अतः बुधैः तत्शास्त्रं अधुनानांगीकृतं अतः इदानीमपिसर्वैःबुधैः तत् शास्त्रत्वेन नांगीकर्तव्य मिति ॥ **अत्रब्रूमः** ॥

**शास्त्रस्य-शास्त्रत्वं**—बुधानां अनंगीकारेण निरस्तं नभवति वेदेयत्साधुत्वेनउक्तं तस्य असाधुत्व कल्पना ब्रह्मणापिकर्तुं अशक्या वेदस्य स्वतः प्रमाणभूतत्वात् यदिस्मृतयः वेदविरुध्धाभवेयुः तर्हिं ता अप्रमाणानि बभूवुः यदिनविरुध्धाः तर्हिताअपिप्रमाणान्येव तासां अप्रामाण्यं कल्पयितुं केपिऋषयः पुराणद्रष्टारश्च समर्थाः नभवंति ॥ किमु इतरे बुधाः महात्मानः ॥ एवंसति अयंपूर्वपक्षः बुध्धिमाद्भिः आर्यैः दूषयितव्यः ॥

**पूर्वपक्षिणः वक्ष्यमाणान् श्लोकानवलंबंते—तथाहि—क्रतुः**

ऊढायाः पुनरुद्वाहं दत्ताकन्यानदीयते । न यज्ञे गोवधः कार्यः कलौच न कमंडलुः । विधवायां प्रजोत्पत्तिः देवरस्यनियोजनं । वालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः । दत्तौरसेतरेषांच पुत्रत्वेन परिग्रहः । अस्थिसंचयनादूर्ध्वं अंगस्पर्शनमेवच । शिष्यस्य गुरुदारेषु गुरुवत् वृत्तिरीरिता । सवर्णानां तथादुष्टैः संसर्गः शोधितैरपि । वलात्कारादि दुष्टस्त्री संग्रहोविधिचोदितः । नवोदकेदशाहंच दक्षिणागुरुचोदिता ॥

एतानिलोकगुप्त्यर्थं कलेरादौ **महात्मभिः** ।
निवर्तितानिसर्वाणि व्यवस्थापूर्वकं **बुधैः** ॥

**किंचस्मृत्यर्थसारे—आदित्यपुराणे.**

ऊढायाः पुनरुद्वाहं जेष्टांशं गोवधंतथा ॥ कलौपंचन कुर्वीत भ्रातृजायां कमंडलुं ॥

**वायवीयसंहितायां.**

मृतेजीवति वापत्यौ नसुतं देवरादितः ।
क्षांतसप्तपदां कन्यांनो द्वहेच्च कलौद्विजः ॥

**बृहन्नारदीय पुराणे.**

दत्तायाश्चैव कन्यायाः पुनर्दानं परस्यच ॥

**क्रतुः**—देवराच्च सुतोत्पत्तिः दत्ताकन्या नदीयते ।
न यज्ञेगोवधः कार्यः कलौनच कमंडलुः ॥

**हेमाद्रौ—देवलः**

समुद्रयातुः स्वीकारः कमंडलुविधारणं ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानंपरस्यच ॥ दीर्घकालं ब्रह्मचर्यं वर्जयेत कलौयुगे ॥ एतान्यस्तुत्यजेत्धर्मान् सद्विजोदोषभाग्भवेत् तस्यवै निष्कृतिर्नास्ति तप्तकृच्छ्रशतैरपि ॥

कश्चनपुरुषः नाम्नाक्रतुः कलौस्थितः श्रुतिस्मृतिपुराणेषु उक्तं शास्त्रं "कलेरादौ" "महात्मभिः" "बुधैः" निवर्तितं इति वदति । केते महात्मानः केते बुधाः तान्-सःनवदति । यदिते नऋषयः तर्हितेषां वाक्यं प्रमाणं नभवति । यदिऋषयः तर्ह्यपिते पूर्वऋषीणां वाक्यानि अप्रमाणानिकर्तुं असमर्था एव । पराशर शास्त्रस्य कलिकालीय शास्त्रत्वात् तन्निरोत्धुं अशक्ता इति किमुवक्तव्यं ॥

**पुराणपर्यालोचने सति**—सर्वेषां पुराणानां उत्पत्तिः कलौ अभूत् इति दृश्यते । अतः कलौ वर्जनीयानि कर्माणि तेषु अवश्यं वक्तव्यानि । तानि पुराणानि वक्ष्यमाणानि—१ ब्राह्मं २ पाद्मं ३ वैष्णवं ४ शैवं ५ भागवतं ६ नारदं ७ मार्कंडेयं ८ आग्नेयं ९ भविष्यं १० ब्रह्मवैवर्तं ११ लैंगं १२ वाराहं १३ स्कांदं १४ वामनं १५ कौर्म्यं १६ मात्स्यं १७ गारुडं १८ ब्रह्मांडं ॥ इति ॥

**श्रीभागवते द्वादशस्कंधे सप्तमेध्याये श्लो० २२–२४.**

एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ।
मुनयोऽष्टादशप्राहुः क्षुल्लकानि महांतिच ॥
ब्रांह्मंपाद्मं वैष्णवंच शैवं लैंगं सगारुडम् ।
नारदीयं भागवत माग्नेयं स्कांदसंज्ञितं ॥
भविष्यं ब्रह्मवैवर्तं मार्कंडेयंच वामनं ।
वाराहं मात्स्यं कौर्मंच ब्रंह्माडाख्यमिति त्रिषट् ॥

**तेषांमत्धे** अग्निपुराणं बौत्धावतारानंतरं अभूदिति वक्ष्यमाणैः तत्पुराणगत वचनैरवगम्यते—तथाहि ।

**अग्निपुराणे अ० १६.**

वक्ष्येबुत्धावतारंचपठतः श्रृण्वतोर्थदं ॥ पुरादेवासुरेयुत्धे दैत्यैः देवाः पराजिताः ॥ रक्षरक्षेति शरणं वदंतो जग्मुरीश्वरं ॥ महामोहस्वरूपोसौ शुत्धोदनसुतो भवत् ॥ मोहयामास दैत्यांस्तांस्त्याजिता वेदधर्मकं ॥ तेच बौत्धा बभूवुर्हि तेभ्योन्ये वेद वर्जिताः ॥ आर्हतः सोभवत् पश्चादार्हता नकरोत्परान् ॥ एवं पाषंडिनोजाताः वेदधर्मादि वर्जिताः ॥ ४ ॥ नरकार्हं कर्मचक्रुर्ग्रहीष्यंत्य धमादपि ॥ सर्वे कलियुगांतेतु भविष्यंतिच संकराः ॥ * * * ॥ कल्कीविष्णुयशः पुत्रो याज्ञवल्क्य पुरोहितः ॥ उत्सादयिष्यतिम्लेच्छान् गृहीतास्त्रः कृतायुधः ॥ ८ ॥

**अस्मिन् पुराणेयदुक्तं तत्सर्वं प्रसित्ध स्मृतीरवलंब्यैवउक्त मितिभाति वक्ष्यमाणवचनैः ॥**

**अग्निपुराणे अ० १६२.**

मनुर्विष्णुर्याज्ञवल्क्यो हारीतोऽग्निर्यमोंगिराः ।
वशिष्टदक्ष संवर्तशातातप पराशराः ॥ १ ॥
आपस्तंबोशनो व्यासः कात्यायन बृहस्पती ।
गोतमः शंखलिखितौ धर्ममेते यथाब्रुवंन् ॥ २ ॥
तथावक्ष्ये समासेन भुक्ति मुक्ति प्रदंश्रृणु ॥

**अस्मिन् पुराणेपि पूर्वोक्त विवाहशास्त्रं वेदेषु स्मृतिषुच प्रणीतं कलौनिषित्ध मितिनोक्तं प्रत्युत शास्त्रीय मिति स्पष्ट तया उक्तं–तथाहि ॥**

**अग्निपुराणे अ० १५४.**

सकृत् कन्याप्रदातव्या हरंस्तां चोर दंड भाक् ॥
अपत्य विक्रयासक्ते निष्कृतिर्नविधीयते ॥
कन्यादानं शचीयागो विवाहोथ चतुर्थिका ॥
विवाहमेतत्कथितं नामकर्म चतुष्टयं ॥
नष्टेमृते प्रव्रजिते क्लीबेच पतितेपतौ ॥
पंचस्वापत्सुनारीणां पतिरन्योविधीयते ॥
मृतेतुदेवरे देयात् तदभावे यथेच्छया ॥

**कलौ उभ्दूतं इदं पुराणं**–अष्टादशमहापुराणानांमत्धे एकं–" कलौ पाराशरःस्मृतः " इति प्रसित्धायाः स्मृतेः अविरूत्धंच–अस्मिंश्च वेदस्मृतिमहाभारतादिप्रमाणेषुच यत् प्रणीतं-तत्-पूर्वपक्षिभिः पूर्वोक्त श्रुतिस्मृतिमहापुराणेषु अनुक्तवचनैः अशास्त्रीकर्तुं वर्षशतैरपि **असाध्यं ।**

**केचित्** पूर्वपक्षिणःतानि वचनानि आदिपुराणात् उत्धृतानि इति वदंति **अन्येतु**—आदित्यपुराणादिति—**अपरेतु** इतर ग्रंथादिति—एतेषांमत्धे **कोपिग्रंथः प्रसित्धास्मृतिर्वा—पुराणंवान**—अष्टादिपुराणानि—अष्टा-दश पुराणानांमत्धे **कान्यपिन**—तानि प्रसित्धव्याख्यानकर्तृभिः **नव्या-ख्यातानि**—तेषां संपूर्णासंहितापि **नकुत्रापिदृश्यते** यदि वर्तेरन् यदि प्रमाणभूतानिभवेयुः तथापि इतर पुराणानि—तत्रापि—पूर्वोक्तं कलौ प्रवर्तितं अग्निपुराणं—खंडयितुं—अशक्तान्येवभवितव्यानि—**समानशास्त्रद्वैधे उभयमपि ग्राह्यमिति न्यायात्**—स्मृतीःरोत्धुंतानि अशक्तानीति किमु वक्तव्यं—अस्मिन् विषये द्वैतिनः वैष्णवाः उदाहरंति ॥

वेदाश्च पंचरात्राणि प्रमाणं मुख्यमीरितं ॥ अविरुत्धानि यान्येषां पुराणानिचकानिचित् ॥ भारतादीनिचान्यानि प्रमाणानीति वैविदुः ॥ श्रुतिस्मृतीतुतस्याज्ञे तत्रोक्तं पुण्यमाचरेत् ॥ इति ॥

**किंच** "ऊढायाः पुनरुद्वाहं" निषित्धकत्यानांमत्धेएक मिति वदंति—ऊढा-का? उद्वाहः कः? या ससंभवा—साऊढा—उद्वाहः पाणिग्राहणिकैः मंत्रैः **संस्कारः संभवसहितः**—तथासति—किंनिषित्धं भवति—? संभव-सहितानां क्षतयोनीनां—पुनस्संस्कारः—एततूकर्तव्य मितिवयं **नब्रूमः** ॥ "**दत्ता** कन्या नदीयते" इति अपरंनिषेधकं शास्त्रं—दानंतुत्रिविधं—मनोदानं । वाक्दानं । अग्निसाक्षिकंदानमिति—एवं दत्तानां पुनर्दानं सर्व कालेपि निंद्यं निषित्धं चेतिऋषयः वदंति तत् कलावेव निषित्धामितिन—एवं सति अस्य निषेधस्य प्रयोजनं नपश्यामः किंच—**वयंतु** अनापदि तासां पुनर्दानं अशास्त्रीयं अतः अयुक्तमिति—किंच—तासां परिगृहीतारः **अपांक्तेयाः इति वदामः**—आधुनिकाः सर्वे **महात्मानः बुधाः** एतत् कुर्वंति—उपदिशंतिच । दानानंतरं बहुशः संस्कृतापि कन्या अनापद्यपि अन्यस्मै दातुं योग्या इति वदंति—ताः पुनर्भ्वः नेतिचमन्यंते

अतः आधुनिकाः **पंडिताः महात्मानः बुधाः** एतत् निषेधस्य शास्त्रत्वं नांगीकुर्वंतीतिभाति ॥

**किंच कलौ**—"न यज्ञे गोवधः कार्यः" इति एकं निषेधकं शास्त्रमितिच वदंति—कलेः पूर्वमेव—गोवधस्यनाचारोभूत्—श्रीमद्रामायण भारतादिषु कुत्रापि यज्ञे गोवधः नदृश्यते—कलिकालात्पूर्वमेव अस्य आचारस्य नष्टत्वात्—तस्य निषेधः अनावश्यकएव ॥

**कमंडलु धारणमपि कलौ निषित्धं**—इतिच वदंति—अस्य निषेधस्य शास्त्रीयत्वं षण्मतस्थापनाचार्यशिष्यैः श्रीमद्रामानुजपूर्णबोध शिष्यैश्च आधुनिकैः सर्वैरपिच नांगीकृतं—यदि कमंडलुधारणं निषित्धं—तर्हि सर्वे **आधुनिकाः महात्मानः बुधाः** वयमिव कलिकालीयशास्त्रं अपहाय—पौर्वयुगं शास्त्रं—अवलंबंते इतिभाति ॥

**विधवायां** प्रजोत्पत्तिरपि पूर्वोक्त वचनैः निषित्धा—विधवायां प्रजोत्पादनं वयमपि प्रशस्तमितिनवदामः प्रजोत्पादनार्थं विधवायां संयोगः सर्वदा त्याज्यएव—कलिकाल मात्र इतिन—विधवायां प्रजोत्पादनेन सा प्रजा उत्पादयितुः नभवति—किंतु—सा गोळक इत्युच्यते—सर्वकालेषु निंद्या भवति ॥

**देवरस्य नियोजनमपि** निषित्धमिति पूर्वोक्ताः **महात्मानः बुधाः** वदंति—तत्—श्रीमहाभारतोदाहृत वाक्यैः अभ्युपगतत्वात् शास्त्रीयमेव ॥ निषित्धंवानवा तदिदानीं अवश्यं कर्तव्यमेवेतिवयं नवदामः ॥

**बालिका** क्षतयोन्याश्च वरेणान्येन संस्कृतिरपि निषित्धेति वदंति—अस्य निषेधस्य शास्त्रीयत्वं अंगी कुर्वद्भिः सर्वैः अक्षतयोनयः अन्यैः वरैः मांगल्यधारणानंतरमपि संस्क्रियंते—एवमेव इतरेषु वचनेष्वपि द्रष्टव्यं ॥

**हेमाद्रौ** उत्धृतो देवलः कमंडलु धारिणां—दीर्घ काल ब्रह्मचारिणांच दत्तायाः कन्यायाः पुनर्दानकर्तॄणांच कृच्छ्रशतैरपि निष्कृतिर्नास्तीति वदति—श्रीमदद्वैतिसन्यासिनःमठाधिपतयः उडपिवासिमाध्वसन्यासिनः इदानीं कमंडलुं धारयंति । दीर्घं ब्रह्मचर्यं चरंतिच—अतः संस्कृताः पुनर्भ्वः स्त्रियः तासां भर्तारः पौनभर्वाश्च—एते सर्वे पूर्वोक्त सन्यासिभिः समाःभांति—उभयेषां एकागतिरिति निष्पन्नं भवति—तथा सति—अक्षतयोनीनां विवाहस्य युक्तत्वेन प्रतिपादकानां चिंता नास्तीतिभाति ॥

**अस्थिसंचयनादूर्ध्वं अंगस्पर्शनमपि** निषित्धमिति—**महात्मानः बुधाः** वदंति—अग्निपुराणवत् विष्णुपुराणमपि कलौ उद्धृतं ( अं० ४ अ० २० द्रष्टव्यं ) तस्मिन् पुराणे पूर्वोक्तांगस्पर्शस्य कर्तव्यता उपदिष्टा भवति ॥

**वि० पु० अं० ३—अ० १३ श्लो० १४.**

चतुर्थे ह्नि कर्तव्यं भस्मास्थिचयनंनृप ॥
तदूर्ध्वं मंगस्पर्शश्च सपिंडानामपीष्यते ॥

**पूर्वोक्तैः महात्मभिः बुधैः** यद्यत् निषित्ध मिति उक्तं तत्तत् निषित्धमिति अस्मिन् पुराणेवा इतर महापुराणेष्वपिवा नोक्तं ॥

**किंच**—अग्निहोत्रं गवालंभं सन्यासं पलपैतृकं ॥
देवराच्च सुतोत्पत्तिः कलौपंच विवर्जयेत् ॥
अश्वालंभं गवालंभं सन्यासं पलपैतृकं ॥
देवरेण सुतोत्पत्तिः कलौपंच विवर्जयेत् ॥
इति केचित् **महात्मानः बुधाः** वदंति ॥

मुचुकुंदकृष्णसंवादात्पूर्वमेव कलिःप्रादुरभूत् इति श्रीभागवतादवगम्यते । एतत्संवादकालानंतरं भगवान् श्रीकृष्णः अश्वालंभं पांडवैः

कारितवान् स्वयंच अकरोत्—तथैव अग्निहोत्रमपि—तदासन्यासिनः वहवः अभूवंन्—एतावत्कालपर्यंतं श्रीमच्छंकर-रामानुज-पूर्णबोधपरंपरागत सन्यासिनः वर्ततएव—पूर्वोक्तश्लोकयोः वर्जनीयाइत्युक्तानांमध्ये—त्रीणि—कलौबुधैः नवर्जितानीति दृश्यते—परंब्रह्म श्रीकृष्णः श्रीमच्छंकर-रामानुज-पूर्णबोधाः सदाशिवानंतवायवः पूर्वोक्तश्लोकयोः उक्तस्य कलिकालीयशास्त्रस्य—शास्त्रत्वं नांगीचक्रुः—इति दृश्यते—अतः इदंशास्त्रं नेतिवदामः ॥

**१३. विवाहस्य ऐच्छिकत्वात् पूर्वोक्तायां आपद्यपि स्त्रियाः पुनः भर्तृपरिग्रहः ऐच्छिकएव किंच अन्य भर्तुरपरिग्रह आमुष्मिकफलविशेषोपि भवति सा इहापि सद्भिः साध्वीति चोच्यते ॥ अत्राहुः ॥**

**मनुः अ० ५ श्लो० १५६–१६२.**

पाणिग्राहस्य साध्वी स्त्री जीवतोवा मृतस्यवा ॥
पतिलोकम भीप्संती नाचरे त्किंचिदप्रियं ॥

* * * *

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥

**अ० ९ श्लो० २९.**

पतिंया नाभिचरति मनोवाक् देहसंयता ॥
सा भर्तृलोक माप्नोतिसद्भिः साध्वीति चोच्यते ॥

**विष्णुः अ० २५ प० ११०.**

मृते भर्तरि साध्वीस्त्री ब्रह्मचर्ये व्यवस्थिता ॥
स्वर्गंगच्छ्य पुत्रापि यथाते ब्रह्मचारिणः ॥

**याज्ञवल्क्यः अ० १ श्लो० ७५.**

मृते जीवतिवा पत्यौयानान्य मुपगच्छति ॥
सेहकीर्ति मवाप्नोति मोदते चोमयासह ॥

पराशरः अ० ४ प० १९.

मृते भर्तरिया नारी ब्रह्मचर्ये व्यवस्थिता ॥
सा मृता लभते स्वर्गं यथा सद्ब्रह्मचारिणः ॥

१४. एवंच स्त्रीणां प्रव्रजन कालौ द्वौवर्तते.

दानकालएकः आपत्प्राप्तौ अपरः एतयोर्मध्ये एकस्मिन् काले प्रव्रजेत् प्रव्रजनानंतरं गार्हस्थे पुनः प्रवेशो नविद्यते यदि पुनः प्रविशेत् सा वांताशिनीति प्रकीर्त्यते भ्रष्टा भवतिच अतः कन्यादान काले आपदिच अक्षता कन्या प्रष्टव्यात्वं सकामावा निष्कामावेति यदि सकामा अथवा न निष्कामा तर्हि तस्याः मुंडनादिकं न कर्तव्यं यर्हिसा सम्यगालोच्य प्रव्राजितुं इछति तर्हि तस्याः मुंडनादिकं कर्तव्यं ॥

ननु इदानीं तनेषु एतच्छास्त्ररीत्या आचारोनदृश्यते एवं सति सज्जनैः आचारो बलीयान् इति न्यायात् आचारएव ग्राह्यः न शास्त्रं इतिचेत्–मैवं–शास्त्रमेव अनुष्ठातव्यं नतु शास्त्र विरुत्ध आचारः ॥ तथाहि ॥

वृ० गौ० अ० १४ प० ५९९.

धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ॥
द्वितीयंतु स्वशास्त्राणि तृतीयं लोक संग्रहः ॥

मनुः अ० २ श्लो०

श्रुतिस्मृत्यु दितंधर्म मनुतिष्टन् हि मानवः ॥
इहकीर्ति मवाप्नोति प्रेत्यचानुत्तमं सुखं ॥ ९ ॥
श्रुतिस्तु वेदोविज्ञेयो धर्मशास्त्रंतुवै स्मृतिः ॥
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मोहि निर्बभौ ॥ १० ॥

योवमन्येत तेमूले हेतु शास्त्रा श्रया द्विजः ॥
स साधुभिर्वहिष्कार्यो नास्तिको वेद निंदकः ॥ ११ ॥
श्रुतिद्वैधंतु यत्रस्यात् तत्र धर्मा वुभौस्मृतौ ॥ १४ ॥

**गौतमः अ० ११ प० ४१९.**

देशजाति कुलधर्माश्चाम्नायैरविरूत्धाः प्रमाणं ॥

**व्यासः अ० १ श्लो०.**

श्रुतिस्मृति पुराणानां विरोधो यत्र दृश्यते ॥
तत्र श्रौतं प्रमाणंतु तयोर्द्वैधे स्मृतिर्वरा ॥ ४ ॥

**गो० गृ० सू० २ प्र० ३ कां० प० ३३०–३३१.**

भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थं ॥ २२ ॥

**भाष्यं**—स्मृतिमूलः खल्वाचारः तया विरोधे स्वयमेव वाध्यतेनजातुचि-
दपितां बाधितुमीष्टे । नहि पाश्चिमासित्धेनाचारेण पूर्वासित्धं
शास्त्रमुपरोत्धव्यं इतियुक्तं ।

*　　*　　*　　*

गृह्योक्तधर्माणां जनपदादिधर्माणांच विरोधे गृह्योक्तधर्माणा मेव-
करणं इति गृह्यकाराणांमतं विज्ञायते ॥ २२ ॥

**आ० गृ० सू० १–७–२.**

"यत्तुसमानं तद्वक्ष्यामः" ।

**भाष्यं**—जनपदादि धर्माणां वक्ष्यमाण धर्माणांच विरोधे सति वक्ष्यमाण
मेवधर्मं कुर्यात् जनपदादि धर्ममिति यद्वक्ष्यामःतत् सर्वत्र समा-
नमेवेत्यर्थः ॥ वैदेहेषु सद्यएवव्यवायोदृष्टः गृह्येतु ब्रह्मचारिणौ
त्रिरात्रं इति ब्रह्मचर्यं विहितं तत्र गृह्योक्तमेव कुर्यात् न देश
धर्म मिति सित्धं ॥

**स्मृतिसारे.**

समयाचारिका धर्माः जाति देश कुलोद्भवाः ॥
ग्रामाचाराः परिग्राह्याः येच विध्य विरोधिनः ॥

**चतुर्विंशतिमते.**

स्मृतेर्वेद विरोधेतु परित्यागो यथा भवेत् ॥
तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् ॥

**भागवते–९ स्कं० ६ अ०.**

तेच ह्यर्वाक्तनयानिजलोक यात्रयांधपरंपरयाश्वस्ताः
तमस्यंधे स्वयमेव प्रपतिष्यंति ॥ १२ ॥

**श्रीमत्कृष्णोपनिषदि–भगवद्गीतायां–अ० ४.**

**भगवानुवाच**–इमं विवस्वते योगं प्रोक्तवानहमव्ययं ॥
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे ब्रवीत् ॥ १ ॥
एवं परंपरा प्राप्तं इमं राजर्ष योविदुः ॥
सकालेनेह महता योगोनष्टः परंतप ॥ २ ॥
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतं ॥ १५ ॥

**श्रीमच्छंकर भा०.**

एवं क्षत्रिय परंपरा प्राप्तं इमं–राजर्षयो राजानश्चते ऋषयश्च राजर्षयो विदुः इमं योगं सयोगः कालेनेह महतादीर्घेण नष्टो विछिन्न संप्रदायः संभूतः ॥ २ ॥ पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुनातनं कृतं–निर्वर्तितं ॥ १५ ॥

**श्रीमद्रामानुज भा०.**

योयंतवोदितो योगः सकेवलं युध्धप्रोत्साहनायेदानीमुदित इतिन मंतव्यं–मन्वंतरादावेव निखिल जगदुध्धरणाय परमपुरुषार्थलक्षणमोक्ष

साधन तयेमं योगमहमेव विवस्वते प्रोक्तवान् विवस्वांश्च मनवे मनुरिक्ष्वा-कवे इत्येवं संप्रदाय परंपरया प्राप्तमिमं योगं पूर्वे राजर्षयो विदुः समहता कालेन तत्तच्छ्रोतृ बुध्धिमांद्या द्विनष्टप्रायोभूत् १—२—पूर्वै र्विवस्वन्मन्वा-दिभिः कृतं पूर्वतरं पुरातनं तदानीमेव मयोक्तं वक्ष्यमाणाकारं कर्मैवकुरु ॥ १५ ॥

**श्रीमन्मध्व भा०.**

पूर्वानुष्ठितश्चायं धर्म इत्याह इम मिति ॥ १ ॥
पूर्वं कृतं कर्म पूर्वभावीत्यर्थः ॥ १५ ॥

**आनंदागिरिटीकायां.**

ते तदैव संपाद्य कर्मकृतवंतो न तदिदानीम प्रामाणि
कत्वात् अनुष्ठेयमित्याशंक्याह—पूर्वतर मिति ॥ १५ ॥

**श्रीधरीयटीकायां.**

एवंराजानश्चते ऋषयश्चेति अन्येपि राजर्षयो
निमिप्रमुखाः स्वपित्रादिभिरिक्ष्वाकु प्रमुखैः प्रोक्तं
इमं योगं विदुर्जानंतिस्म अद्यत नाना मज्ञाने
कारणमाह सयोगः कालवशा दिहलोके नष्टोविच्छिन्नः ॥ २ ॥
पूर्वैर्जनकादिभिरपि मुमुक्षुभिः सत्व शुध्यर्थं
पूर्वतरं युगांतरेष्वपिकृतं—तस्मात्त्वमपि प्रथमंकर्मैवकुरु ॥ १५ ॥
तच्चतत्वविद्भिः सहविचार्य कर्तव्यं
न लोक परंपरामात्रेणे त्याह किं कर्मेति ॥ १६ ॥

**श्रीमद्भगवद्गीतायां अ० १६ श्लो०.**

यः शास्त्रविधि मुत्सृज्य वर्तते कामकारतः ॥
नससिध्दि मवाप्नोति न सुखं न परांगतिं ॥ २३ ॥

तस्मात् शास्त्रं प्रमाणंते कार्याकार्य व्यवस्थितौ ॥
ज्ञात्वा शास्त्र विधानोक्तं कर्मकर्तु मिहार्हसि ॥ २४ ॥

**श्रीमच्छंकर भा०.**

शास्त्रविधिं—शास्त्रंवेदः तस्यविधिं—कर्तव्या कर्तव्य ज्ञानकारणं-२३. शास्त्रमेवविधानं—शास्त्रविधानं ॥ २४ ॥

**श्रीमद्रामानुज भा०.**

शास्त्रं वेदाख्यंविधिः २३. तस्मात् कार्याकार्य व्यवस्थितौ. उपादे यानुपादेय व्यवस्थायां शास्त्रमेव तवप्रमाणं धर्मशास्त्रेतिहास पुराणोप-बृंहितावेदाः ॥

**आनंदगिरिटीकायां.**

शिष्यते बोध्यतेनेन पूर्वोर्थ इति शास्त्रं ॥ २३ ॥

**श्रीधरीयटीकायां.**

शास्त्रविधिं—वेदविहितं धर्मं ॥ २३ ॥

**श्रीमहाभागवते पंचमस्कंधे षष्ठेध्याये १२ गद्ये.**

**आचाराणां आचारत्वं वेदमूलकं—अन्यथातेषां अप्र-माणत्वमेव ॥ तथाहि ॥**

**श्रीधरः**

**तेच ह्यर्वाक्तनयानिजलोक यात्रयांधपरंपरयाश्वस्तास्त मस्यंधे स्वयमेव प्रपतिष्यंति ॥ अर्वाक्तनया अवेदमूलया निजलोक यात्रया—स्वेछाकृत प्रवृत्त्या—आश्वस्ताः कृत विश्वासाः ॥ इति ॥**

अतः सद्भिः शास्त्रमेवानुसरणीयं तद्विरुत्धाचारः त्याज्यः अस्मिन् ग्रंथेयन्मयाप्रोक्तं तच्छास्त्रीयमिति जाने—यदितत् अशास्त्रीयं तर्हि तस्य अशास्त्रीयत्व दर्शकाणि श्रुतिस्मृत्यापत्थ- र्मीयाणि—प्रमाणानि प्रेषणीयानीति विनयपुरस्सरं सर्व पंडितान् आचार्यान् गुरूनपि श्रीमत्कृष्णमतानुयायी **रघुनाथः** प्रार्थये.

कल्यब्दे, ४९८३.

चित्रभानुवर्षे तुलामासे.

समाप्तोयं ग्रंथः

---

**पराशरः** नष्टेमृतेप्रव्रजिते क्लीबेचपतितेपतौ । पंचापत्सुचनारीणां पतिरन्योविधीयते ॥

**अत्रिः** नष्टेसन्यासमापन्ने व्याधिग्रस्तेचभर्तरि । पुनःस्त्रीणांविवाहःस्यात् कलावपिनसंशयः ॥

**गौतमः** मरणानंतरं भर्तुर्यद्यनाहतयोनयः । स्त्रियो विवाहमर्हंतिनात्र कार्या विचारणा ॥

**विश्वामित्रः** अस्पृष्टलिंगयोनीनामाविंशतिवयःस्त्रियाः । पुनर्विवाहःकर्तव्यःचतुर्षुचयुगेष्वपि ॥

**नारदः** उद्वाहितापि साकन्यानचेत्संप्राप्तमैथुना । पुनः संस्कारमर्हेत यथा कन्यातथैवसा ॥

**च्यवनः** पूर्वं निषेकान्नारीणां मृतेपत्यौततःपरं । दशाहाभ्यंतरेकुर्या द्विविवाहंपुनःपिता ॥

**वैशंपायनः** पुरुषाणामिवस्त्रीणांविवाहाःबहवोमताः । भर्तृनाशेपुनःस्त्रीणांपुंसांपत्नीलयेयथा ॥

**काश्यपः** आषोडशवयो नार्योयदिता मृतभर्तृकाः । पुनर्विवाहमर्हंतिन तत्रविशयोभवेत् ॥

**जावालिः** ब्राह्मणाःक्षत्रियाःवैश्याःशूद्राःस्वकुलयोषितां । पुनर्विवाहंकुर्वीरन् अन्यथापापसंभवः ॥

**अगस्त्यः** भर्त्रभावेवयःस्त्रीणां पुनःपरिणयोमतः । नतत्रपापं नारीणां अन्यथातद्गतिर्नहि ॥

**व्याघ्रपात्** पत्निनाशेयथापुंसो भर्तृनाशेतथस्त्रियाः । पुनर्विवाहःकर्तव्यः कलावपियुगेतथा ॥

**वसिष्ठः** भर्तृसंबंध शून्यानां भर्तृनाशेतुयोषितां । पुनर्विवाहं कुर्वीतपापं नैवमनागपि ॥

**बृहस्पतिः** अज्ञातभर्तृसंबंधाः भवंतियदियोषितः । गतप्रियायदातासां पुनःपरिणयोभवेत् ॥
विवाहेच्छायदा स्त्रीणांभर्तृनाशेतुजायते । पुनरक्षतयोनीनां विवाहकरणंमतं ॥

**मृकंडुः** निषेकानंतरंस्त्रीणां भर्तुर्भर्तृत्वमुच्यते । पाणिग्रहणमात्रेण न भर्ता सर्वयोषितां ॥

**याज्ञवल्क्यः** आगर्भधारणंस्त्रीणां पुनःपरिणयःस्मृतः । भर्तृनाशेतुमांगल्यं प्राप्तुमर्हंतियोषितः ॥

**शौनकः** गर्भाधानविहीनानां स्त्रीणांकर्माधिकारिता । भर्तृणांविषयेनैव म्रियमाणेषुतेष्वपि ॥
लिखाम्यहमिदानींवा वचनानिबहूनिते । कालांतरेणवास्त्रीणां पुनरुद्वाहकर्मणि ॥